वर्धयन्ती । यस्य स्फारासिधारा तडिदिव तरला वैरिकण्ठोपकण्ठं प्राप्ता सद्यो नटीव प्रणयकुतुकिनी मोद्‌मानिष्करोति ॥ १७ ॥ चूडापीठाभिरामः स्फुरदुरुमणिभिर्मुद्रिकाकल्पभूतैर्दोर्दण्डः कुण्डलीन्द्रस्तव जयति जगन्मण्डलाधाररूपः । क्षीरश्रान्त्यारिकीर्तिं सपदि समुदितां पातुरामः स्वर्पजिह्वासुच्चैः किमेना चपलयति चमत्कारिणी खड्गधाराम् ॥ १८ ॥

---

## राजयात्रावर्णनम्

प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम् । राजहंसगतिः पद्मामाननेन शशिद्युतिः ॥१॥ दिङ्नारीणां स्पृशत्यर्को रजःसंदूषिताम्बरम् । प्रस्थाने नृपते सन्तोऽपश्यन्ति रजोवृताः ॥ २ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ ३ ॥ यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री । आक्रमणाधिष्ठितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ४ ॥ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि । कुर्वन्ति सामन्तशिखामणीनां प्रेमाम्बरोहास्पदमयं रजांसि ॥ ५ ॥ यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जितम् । तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ६ ॥ त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति । द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव निषेवत एव लक्ष्मीः ॥ ७ ॥ त्वयि प्रचलति प्रभो तुरगवल्गनाप्सु स्फुरद्धरावलयधूलिभिः सकलमेव कीर्णं नभः । दिवाकरहयावली निरवलम्बसंचारतः श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥ ८ ॥ चोली चोलीं न तु कल्यते गुर्जरा जर्जराङ्गी भूर्नाकान्तं विशति विपिनं मालवी सालवीथिम् । नो संगीतं रचयति मनागङ्गवङ्गी कृशाङ्गी नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥ देव त्वद्विजयप्रयाणविलसत्सद्वाजिराजिव्रजक्षुण्णक्ष्मातलदीनपांसुपटलव्याप्तोऽनिमेषेक्षणः । सुत्रामा बहु मन्यते फणिपतिं पातालमूलस्थितं सोऽप्युद्दामकरीन्द्रदुर्धरभरश्रान्तः सहस्रेक्षणम् ॥१०॥ देवे दिग्विजयोद्यते धृतधनुःश्रेण्यर्थिसीमन्तिनीवैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति । आस्तामन्यनितम्बिनी रतिरपि प्रायो न पौष्पं करे भर्तुर्धर्तुमदाभ्मदान्धमधुपालीलीनिचोलं धनुः ॥ ११ ॥ देव त्वद्विजयोद्यमे हरिखुरोत्क्षतक्ष्मातलप्रोद्भूते रजसः पराग पटले दिक्चक्रमाक्रामति । अक्ष्णां पङ्क्तिगतानि निन्दति निजं हस्तद्वयं निन्दति स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ १२ ॥ युष्मद्वाजिजिताग्रिराजिचरणक्षेपक्षतैर्मोहिनीं मङ्क्षु क्षोणिमनेकश्च सिञ्चति धनैर्भर्ता नदीनां जलैः । आशामण्डलमुत्कटध्वजपटैर्वानं तनोति द्रुतं चञ्चच्चञ्चलरेणुराश्विनमिवानेतुं दिवं गच्छति ॥ १३ ॥ धूर्ताधीरेण देव वासवकरी पङ्केन लिप्तः कथं नीतः स्वर्गतरंगिणीजलमसौ तत्रास्ति पङ्कः कुतः । सर्वाशाविजयोत्सवं प्रति कृतोद्योगे धराधीश्वरे स्फायन्ते करिकर्णतालपवनोद्धूताश्वमूरेणवः ॥ १४ ॥ देव त्वद्गजवाजिपत्त्रपटलप्रोद्धूतधूलीभरैराकाशं वसुधायते खरकरः सोमायते निष्प्रभः । किं चायं भरकुञ्चितः फणवतां नाथः स कूर्मायते कूर्मो भोगपतीयते किमपरं रात्रीयते वासरः ॥ १५ ॥ वेल्लत्पक्षति राजहंसयुवतित्रुट्यन्मृणालावलिभ्राम्यत्पद्पदभूरिझाङ्कृतिपतच्चक्रीकृतक्रेङ्कृति । पर्यस्तभयपद्मसंहति पतद्दिव्यतिर्यग्स्थिति प्रस्थानध्वजवातलोलमजनि स्वर्गापगायाः पयः ॥ १६ ॥ सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्प्रस्थाने तव लज्जयेव नमति व्यक्तं यतो मेदिनी । प्राक्पूर्वाचलपश्चिमाचलकुचावाघूर्णयन्ती प्रोच्छलद्दक्कारावचलत्पयोधिलहरीचेलाञ्चलैश्चञ्चलैः ॥ १७ ॥ प्रस्थाने तव भूमिपाल वसुधा जाता रजोदोषिणा त्वद्विद्विट्दारपयोधरोऽश्रुनवृतं वर्षत्यधोऽश्रूदकम् । झञ्झाश्वासहिमापमौक्तिकगणान्यामाः किरन्ति द्विपस्तत्त्वोत्पात इति प्रतापदहने यास्यन्ति ते शत्रवः ॥ १८ ॥ एतद्दत्तासिघातस्रवदसृगसुहृ-

---

१ राजकुमाराः. २ सेतुश्च मन्थश्चेति. ३ इन्द्रः. ४ शम्बरः. ५ यदि मम भर्ता कामो धनुर्धारयिष्यति तदायं राजा मद्भर्तारं धनुर्धरत्वाद्धनिष्यतीति भयात्स्वभर्त्रा धनुर्नाग्राह्यदिति भावः.

१ अश्वाः. २ समूहः. ३ दृष्टव्यतानि. ४ यतश्चैवाद्रजः समुच्छलितं येन तस्य सहस्रनेत्राणि तिरोहितानि बभूवुस्तेन यदि मम नेत्रसहस्रं नाभविष्यत्तदा चैनावद्रजोनिकरस्तत्र नापतिष्यदतो नेत्रसहस्रं मम किमर्थमभवदिति. ५ तथापि नेत्रसहस्रे तत्तिरोधानाय यदि हस्तसहस्रमप्यभविष्यत्तदा हस्तैः सर्वनेत्राच्छादनं कर्तुं शक्यमतो मम पाणिद्वयं व्यर्थमेवेति. ६ यतो मयाः देवत्वादनिमेषता पक्ष्मपातामावः किमिति प्राप्तः यस्माच्चक्षुषा रजःपटलाक्रान्तत्वमभूद्यदि च मे नयनेष्वनिमेषता नाभविष्यत्तदा पक्ष्मपातोऽपि नाभविष्यदतः स्वामनिमेषतां निन्दतीति भावः. ७ रजःकणसंसर्गात्परिपतन्ती निर्गच्छन्ती नेत्रेभ्यो बाष्पाम्बुधारा अश्रुजलप्रवाहो यस्य सः. ८ इन्द्रः. ९ अश्विनीकुमारं वैद्यम्. १० वाहनम्. ११ त्वदादिन्यैतावती विपुलाश्वसंमर्दादाकाशमपि रजोमयं बभूवेति भावः. १२ चन्द्रांशुः. १३ यथा कूर्मः स्वं शरीरं संकोचयति तथा शेषोऽपि त्वदादिनीभरेण संकुचितशरीरोऽभूदिति भावः. १४ संकुचितशरीरोऽपि प्रलम्बकायोऽभूदित्यर्थः. १५ यतस्त्वाङ्कत्वदादिन्या धूलीपटलं समुच्छलितं येन दिनमन्धकारवशाद्रात्रिरिवाभवद्दिनि भावः. १६ चक्रवाकी.

द्वंशसान्द्रेन्धनैतद्दोरुद्दामप्रतापज्वलदनलमिलद्धूमभूमभ्रमाय । एतद्दिग्जैत्रयात्रासमसमरभर पश्यत क्स नासीदेतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ १९ ॥ तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभि । भूगोलच्छायमायामयगणितविदुन्नेयकायो भियाभूदेतत्कीर्तिप्रतानैर्विधुभिरिव युवे राहुराहूयमान ॥ २० ॥ गान्धारा गुरुदारास्त्वयि चलति गलद्वाष्पधारा विहारा रामत्रासान्धकारा क्षितिपकुलमणे गुर्जरा जर्जराशा । तैलङ्गास्त्यक्तलिङ्गास्त्रिभुवनतिलक त्रिस्य दङ्गा कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि समभवन्वीर गङ्गाविहङ्गा ॥ २१ ॥ काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीरश्रीका काश्चिदन्तर्दिश इव दधिरे दाह सुद्धान्तसत्त्वा । भ्रेमुर्वात्या इवान्या प्रतिपदमपरा भूमिवत्कम्पमाना प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्य शशंसु ॥ २२ ॥ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा दिग्योषा क्रान्ति सद्यस्त्वदरिनृपवधूनेत्रनीराय गाहु । सगम्य त्वत्प्रतापैस्तदनु विभु दधुर्दोहदं देव तासा प्राची प्रात प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥२३॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु क्षुभ्यन्ति क्षोभयन्ति क्षितिमतिमृदितो मर्मणा कूर्मराज । प्रस्थाने यस्य गर्जत्करटिघनघटासभ्रमन्यञ्चदुर्वीमुर्वी दर्वीकरेन्द्र कलयितुमुदितश्चायमार्ति बिभर्ति ॥ २४ ॥ नत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते । विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोका कोका क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूका ॥ २५ ॥ इन्द्र प्रक्षुब्धचित्तो दिशि दिशि सकलान्दिक्पतीन्सावधानान्कुर्वन्वज्रच्छपाणि सुरवरवलिता देवसेना निगूह्य । स्वर्गद्वारे यदीयोद्धतबलनिहतप्रौढढक्कानिनाद श्रुत्वा तिष्ठन्प्रकम्पत्कुचकलशतटीकिंनरीगीयमान ॥ २६ ॥ आजौ त्वद्वाजिराजिप्रखरखुरतरन्यासलीलाभिरुर्व्यां दीर्णाया देव निर्यद्विरलमवनीपाल पातालवह्नि । अश्रीयाद्भिश्चमेव प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ् न निर्वापयेयुः ॥ २७ ॥

### पताका

मयेन कृष्णान्यरुणानि रागात्पाण्डूनि कान्तादिवियोगभाजाम् । द्विषा मनासि ध्वजकैतवेन लोलानि मोस्त्वा नृप सश्रयन्ति ॥ २८ ॥

१ वेणव २ सेनामुखम् ३ रणभूमिषु ४ उच्चण्डल ५ कपटम् ६ गणितशास्त्रैकवेद्य ७ ज्योति शास्त्रप्रमाणक यद्राहोर्भूच्छायात्मक तदेतत्कीर्तिचन्द्रभियेत्युत्प्रेक्षा

### दुन्दुभिः

गङ्गाम्भसि सुरत्राण तव नि साणनि स्वन । स्नातीवारिवधूवर्गगर्भपातनपातकी ॥ २९ ॥ ब्रह्माण्ड प्रविखण्ड्य भूधरगुहासुप्तान्हरीन्बोधयन् गर्भान्वैरिवधूव्रजस्य नृपते निष्पात्य हा पातकी । कीलाल परिशोष्य च प्रतिभटाना तेजसा तेऽद्भुत शोद्धुं विष्णुपदं स्पृशत्यधिपयोराशि प्लुतो दुन्दुभि ॥ ३० ॥ वैरीन्द्राणां धुरीणैरवनिधरगुहागर्ततः प्रोच्छलद्भि स्वापभ्रशपराघप्रचलितनयनप्रान्तमाकर्ण्यमान । त्वत्प्रस्थानान्तरुद्यत्प्रयजलधरध्वानधिक्कारधीरो घृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्वन्द्वनाद ॥ ३१ ॥

### गवाक्षविलोकनम्

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्य । बद्धुं न सभावित एव तावत्करेण रुद्धोऽपि च केशपाश ॥ ३२ ॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्का पदवीं ततान ॥ ३३ ॥ विलोचन दक्षिणमञ्जनेन सभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३४ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्ना न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास ॥ ३५ ॥ अर्धाञ्चिता सत्वरमुत्थिताया पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ३६ ॥ स्तन धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । सप्रस्नुता या पदवीं स्तनाभ्या सिषेच काचित्पयसा गवाक्षम् ॥ ३७ ॥ अभिवीक्ष्य सामिकृतमण्डन यतीं कर रुद्धनीविगलदंशुका स्त्रिय । दधिरेऽधिभित्ति पटहप्रतिस्वनै स्फुटमट्टहासमिव सौधपङ्क्तय ॥ ३८ ॥ रभसेन हारपददत्तकाञ्चय प्रतिमूर्धजं निहितकर्णपूरका । परिवर्तिताम्बरयुगा समापतन्वलयीकृतश्रवणपूरका स्त्रिय ॥ ३९ ॥ व्यतनोदपास्य चरण प्रसाधिकाकरपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ ४० ॥ व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुला । भवनानि तुङ्गतपनीयसक्रमक्रमणक्कणत्कनकनूपुरा स्त्रिय ॥ ४१ ॥ करयुग्मपद्ममुकुलापवर्जितै प्रतिवेश्म लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गना ॥ ४२ ॥ नलिनान्तिकोपहितपल्लवश्रिता व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनि सृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

१ 'सुलतान' इति पदस्य शोधन सुरत्राण इति २ सिंहानाम् ३ अर्धम् ४ गच्छन्ती

## रणसामग्री

अथोच्चकैर्नरठकपोतकंधरातनूरुहप्रकरविपाण्डुरद्युति । बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारज ॥ १ ॥ विषङ्गिभिर्भृशमितरेतर क्वचित्तुरंगमैरुपरि निरुद्धनिर्गमा । चलाचलैरनुपदमाहता सुरैर्नभश्च्युतिरमध एव धूल्य ॥२॥ गरीयस प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् । सिसृक्षत सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छत ॥ ३ ॥ पुरा शरक्षतिजनितानि संयुगे नयन्ति न प्रसभमसृञ्जि पङ्कताम् । इति ध्रुव व्यवधि पुरातरेनीतय खमुत्खुरैरनन्तरस्य वेगत ॥ ४ ॥ क्वचिल्लसद्घननिकुरम्बकर्बुर क्वचिद्धिरण्मयकणपुञ्जपिञ्जर । क्वचिच्छरच्छशधरखण्डपाण्डुर खुरक्षतक्षितितलरेणुरुद्ययौ ॥५॥ महीयसा महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजय ॥ ६ ॥ शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत मुनान एव मा । बलोद्धत धवलितमूर्धजानिति ध्रुव जनाञ्जरत इवाकरोद्रज ॥ ७ ॥ सुसहतैर्दधदपि धाम नीयते तिरस्कृति बहुभिरसशय परै । यत क्षितेरवयव सपदोऽणवस्त्विषानिधेरपि वपुरावरीषत ॥ ८ ॥ द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोवगुण्ठितम् । युगक्षयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ९ ॥ मधुच्छमदिनकावकरकान्तयो रजमला परिमलितावगश्रिय । दिगङ्गना क्षणमविलोकनक्षमा शरीरिणा परिहरणीयता ययु ॥ १० ॥ निरीक्षितु नियति समेत्य कोतुकात्पराक्रम समरमुखे महीभृताम् । रजस्ततावनिमिषलोचनोत्पलव्यथाकृति निदशगणे पराव्यत ॥ ११ ॥ निषङ्गिणि प्रतिपदमापितव्ययो हताविरद्युतिनि समीरलक्ष्मणि । शनै शनैरुपचितपङ्कभारिका पयोमुच प्रययुरपेतवृष्टय ॥ १२ ॥ नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनवगतानि लेभिरे । घनव्यपायधुगतयुगहतोत्पतन्महीरज स्नपनसुखानि दिग्गजै ॥ १३ ॥ गजव्रजाक्रमणभरावनम्रया रसातल यदखिलमानशे भुवा । नभस्तल बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवक्ता स्फुटम् ॥ १४ ॥ समस्थलीकृतविवरेण पूरिता महीभृता बलरजसा महागुहा । रहस्त्रपाविधुरवधूरतार्थिना नभसदामुपकरणीयता ययु ॥ १५ ॥ गते मुखच्छदपटसादृशीं दृशा पथस्तिरोदधति घने रजस्यपि । मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रहसा ॥ १६ ॥ मदाम्भसा परिगलितेन सप्तधा गजाङ्गनक्षमितरजश्चयानध । उपर्यवस्थितघनपांसुमण्डलानभोऽयत्ततपटमण्डपानिव ॥ १७ ॥ तूणीरबन्धपरिणद्धभुजान्तरालमाकर्णलम्बिशिखिपिच्छकलापधारि । कोदण्डपाणि निनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥ १८ ॥ आदावेव गजेन्द्रमौलिनिलसद्दण्डा पताकावली पश्चाद्वारणराजयोरसिनिमोद्दामघोषाश्रिता । उद्दण्डध्वजलाञ्छिता प्यथ घनीभूता रथाना ततिस्तत्पश्चात्तुरगावली विरचिते योधै मम सर्वत ॥ १९ ॥ योधैरेव वशीकृता कथमपि प्रोद्दामरोषान्विता गाढध्वान्तधराधरा इव रणक्षोणीं समालम्बिता । ईषन्मीलितघूर्णित प्रतिदिश प्रक्षिप्तनेत्राञ्चला मन्दान्दोलितमौलयो मदजडैरामान्ति दन्तावला ॥ २० ॥ आरूढक्षितिपालभालविलसत्खेलत्खुरसकोद्धता मेरीझाङ्कृतिचापटकृतिचमत्कारोल्लसन्मानसा । क्षुभ्यच्छोणितलस्फुरत्खुरपुट चञ्चच्चलत्केसर मन्दभ्रान्तविलोचन प्रतिदिश नृत्यन्ति वाजिव्रजा ॥ २१ ॥ अन्यूनोन्नतयोऽतिमात्रपृथव पृथ्वीधरश्रीभृतस्तन्वन्त कलकावलीभिरुपमा सौदामिनीदामभि । वर्षन्त शममानयन्भुव पल्सङ्गारलेखाबुधा काले कालियकायकान्तवपुष पांसूनामम्भोमुच ॥ २२ ॥ हेषाघोषैर्हरीणा नितवननिनदैर्बृंहितै कुञ्जराणा ज्याघातोद्वैर्निनादै पटुपटहरवैर्मर्दलोद्दामशब्दै । प्राप्ते कर्णोपकण्ठ मदकलनिवहस्कन्धघण्टाप्रणादे श्रृङ्गाराय स्मरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ता ॥ २३ ॥ सजाता कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गा करीन्द्रा युज्यन्ता स्यन्दनेषु प्रसभजितमरुत्काण्डवेगास्तुरगा । कुन्तैर्नालोत्पलाना वनमिव ककुभामन्तराले सृजन्त पादाता सचरन्तु प्रसभममिलसत्पाणय पत्तयोऽपि ॥ २४ ॥

## रणवर्णनम्

तनुत्राण तनुत्राण शस्त्र शस्त्र रथो रथ । इति शुश्रुविरे विश्वग्भुद्वटा सुभटोक्तय ॥ १ ॥ पत्ति पत्तिमभीयाय रणाय रथिन रथी । तुरङ्गस्थ तुरङ्गस्थो दन्तिस्थ दन्तिनि स्थित ॥ २ ॥ सङ्ग्रामानन्दवर्षिण्यो विग्रहे पुलकाङ्कित । आसीत्कवचविच्छेदो वीराणा मिलता मिथ ॥ ३ ॥ निर्दयखड्गभिन्नेभ्य कवचेभ्य समुच्छितै । आसव्योमदिश स्तूलै पलितैरिव पाण्डुरा ॥ ४ ॥ खड्गा रुधिरसलिप्ता शुण्डाशुकरमासुग । इतस्ततोऽपि वीराणा वैद्युत वैभव दधु ॥ ५ ॥ गृहीता पाणिभिर्वीरैर्निष्कोशा खड्गराजय । कान्तिजालच्छलाद्वाजौ व्यहसन्समदा इव ॥ ६ ॥ खड्गा

१ वायोर्धनभूतानि रजासि २ मा ब्रियताम्

१ परिन २ कृकतनिदर्शकचर्मनिकृति

शोणितसदिग्धा नृत्यन्तो धीरवाजिषु । रजोघने रणेऽनन्ते विद्युता विभ्रम दधु ॥ ७ ॥ शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधु । आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्करश्रियम् ॥ ८ ॥ वीराणा विषमैर्घोषैर्विद्रुता वारणा रणे । शास्यमाना अपि यन्तृभिर्जग्मुर्धूताङ्कुशा दिश ॥ ९ ॥ रणे बाणगणै भिन्ना भ्रमन्तो भिन्नयोधिन । निमज्जद्गलद्रक्तनिमग्नासु महागजा ॥ १० ॥ खड्गनिर्लूनमूर्धानो निपतन्तोऽपि वाजिन । प्रथम पातयामासुरसिना दारितानरीन् ॥ ११ ॥ वीराणा शस्त्रभिन्नाना शिरासि निपतन्त्यपि । अधावन्दन्त दष्टौष्ठैर्भीषणान्यरिषु क्रुधा ॥ १२ ॥ शिरासि वरयोधानामर्धचन्द्रहृतान्यपि । आददाना भृश पादे श्येना व्यालाशिरे दिश ॥ १३ ॥ उत्क्षिप्ता अपि हस्तीन्द्रै कोपनै पत्तय करे । ते रिपूनहनन्खड्गपातै स्वस्य पुर प्रभो ॥ १४ ॥ उत्क्षिप्य करिभिर्दूर मुक्ताना योधिना दिवि । प्रापि वीरात्मभिर्दिव्याङ्गनाकण्ठपरिग्रह ॥ १५ ॥ कुद्धस्य दन्तिन पत्तिर्जिघृक्षोरसिना करम् । निर्भिद्य दन्तमुसलान्यारुरोह जिघृक्षया ॥ १६ ॥ खड्गेनामूलतो हत्वा दन्तिनोऽङ्घ्रिचतुष्टयम् । प्रतिष्णो प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ १७ ॥ करेण करिणा वीर सुगृहीतोऽपि कोपिना । असिनासृक्प्रहाराणु तस्यैव स्वयमक्षत ॥१८॥ तुरङ्गी तुरगारूढ प्रासेनाहत्य वक्षसि । पततस्तस्य नाश्नासीत्प्रासघात स्वके हृदि ॥ १९ ॥ तुरङ्गसादिन शस्त्रहतप्राण गत भुवि । आत्राढ्योऽपि महावाजी नात्रस्तनयनोऽत्यजत् ॥ २० ॥ द्विषा प्रासहतप्राणो वाजिपृष्ठदृढासन । हस्तोद्धतमहाप्रासो भयो जीवनिवाभ्रमत् ॥ २१ ॥ खड्गेन शितधारेण भिन्नोऽपि रिपुणा भृशम् । नामूर्च्छत्कोपतो हन्तुमियेष च पतन्नपि ॥ २२ ॥ रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासना । कृतकार्मुकसधाना सप्राणा इव मेनिरे ॥२३॥ मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रुषितो रुषा । खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ २४ ॥ पत्ति पदाति रथिन रथेशस्तुरंगसादी तुरगाधिरूढम् । यन्ता गजस्याभ्यपतद्गजस्थ तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ २५ ॥ उत्थापित सयति रेणुरश्वै सान्द्रीकृत स्यन्दनवशचक्रै । विस्तारित कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ २६ ॥ रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नाग । स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोध ॥ २७ ॥ आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य । शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाह ॥२८॥

छिन्नमूल क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूत । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥ २९ ॥ आधोरणाना गजसनिपाते शिरासि चक्रैर्निशितै क्षुराग्रै । हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतु ॥३०॥ तनुत्रजा वर्मभृता विकोशैर्बृहत्सु दन्तेष्वसिभि पतद्भि । उद्यन्तमग्नि शमयाबभूवुर्गजा विविग्ना करशीकरेण ॥३१॥ शिलीमुखोत्कृत्तशिर फलाढ्या च्युतै शिरस्त्रैश्चषकोत्तरेव । रणक्षिति शोणितमद्यकुल्या रराज मृत्योरिव पानभूमि ॥३२॥ केचिद्गदा केऽपि सचापबाणानन्ये कृपाणीमपरे च शूलम् । शक्त्यृष्टिमन्ये मुसल परे च प्रोत्तानहस्ता परिनर्तयन्ति ॥३३॥ मरोपरुद्धाङ्गनमध्यधावन्मत्तद्विपानामधिकोत्सुकानाम् । पादाभिघाताभिहता पतन्ति रथाश्च योधाश्च तुरंगमाश्च ॥३४॥ रम्भातरून्नुद्धतवातपूरा यथा तथा वारणयूथनाथा । सङ्ग्रामभूमौ विनिपातयन्ति रथाश्च योधाश्च तुरंगमाश्च ॥ ३५ ॥ परस्परेण क्षतयो प्रहर्त्रोरुत्क्रान्तवाय्वो समकालमेव । अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सर प्रार्थितयोर्विवाद ॥३६॥ महास्वन सैन्यविमर्दसभव कर्णान्तमूलकषतामुपेयिवान् । पयोनिधे क्षुब्धतरस्य मन्थनो बभूव मूर्छा भुवनोदरभरि ॥ ३७ ॥ महागजाना गुरुबृंहितै शतै सुहेषितैर्घोरतरैश्च वाजिनाम् । घनै रथाना चलचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य नि स्वन ॥ ३८ ॥ घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचित नभस्तलम् । अयायि हर्षैरभिमानस घनभ्रमेण सानन्दमनर्ति केकिभि ॥ ३९ ॥ विलोक्य धूलीपटलैर्भृश भृत द्यावापृथिव्योरलमन्तर महत् । किमूर्ध्वतोऽध किमधस्त ऊर्ध्वतो रजोऽभ्युपेतीति जनैरतर्क्यत ॥ ४० ॥ नोर्ध्वं न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषो गति । सूच्यग्रभेद्ये पृतनारजोभरे सुनिर्भर प्राणिगणस्य सर्वत ॥ ४१ ॥ उद्दामदानद्विपबृंहितै शतैर्नितान्तमुत्तुङ्गतुरगहेषितै । चलद्ध्वजस्यन्दननेमिनि स्वनैरभूत्किरुच्छ्वासमथाकुल नभ ॥ ४२ ॥ महागजाना गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोज्ज्वलै । वीरप्रभेदै प्रमदप्रमेदुरैर्वाचालतामाददिरे तरा दिश ॥ ४३ ॥ दन्तीन्द्रदानाम्बुधिवारिनीचिभि सद्योऽपि नद्यो बहुता पुपूरिरे । धरारजोभिस्तुरगक्षतैर्भृत वा पङ्कतामेत्य रनलीकृतम् ॥ ४४ ॥ निम्नप्रदेशा स्थलतामुपागमन्निम्नत्वमुच्चैरपि सर्वत स्थलम् । तुरङ्गमाणा व्रजता खुरै क्षितौ रथैर्गजेन्द्रै परित समीकृता ॥ ४५ ॥ नभोदिगन्तप्रतिघोषभीषणैर्महामहीभृत्तटदारणोल्बणै । पयोधिनिर्धूननकेलिभिर्जगद्बभूव भेरीस्वनितै समाकुलम् ॥ ४६ ॥ इतस्ततो वातविधूतचञ्चलैरारोपिताशागमनैर्ध्वजांशुकै । लघुक्रम

१ कुवेन २ युद्धे ३ नादेन

न्हस्ती हृष्टरोमेव रेजे ॥ ७८ ॥ आताम्राभा रोषभाज कटान्तादाशू खाते मार्गणे धूर्गतेन । निश्च्योतन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्येव धारा ॥ ७९ ॥ कुर्वं ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् । खड्गाघातैर्दारितादन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघ ॥ ८० ॥ दूरोत्क्षिप्ताक्षिप्तचक्रेण कृत्त मत्तो हस्त हस्तिराज स्वमेव । भीम भूमौ लोलमान सरोष पादे नासृक्पङ्कपेप पिपेष ॥ ८१ ॥ आपस्काराल्लूनगात्रस्य भूमिं नि साधार गच्छतोऽवाङ्मुखस्य । लब्धायाम दन्तयोर्युग्ममेव स्व नागस्य प्रापदुत्तम्भनत्वम् ॥ ८२ ॥ हस्तेनाग्रे वीतभीत गृहीत्वा कश्चिद्व्याल क्षिप्तवानूर्ध्वमुच्चै । आसीनाना व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ८३ ॥ आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददान करेण । सास्थिस्नान दारुवद्दारुणात्मा कश्चिन्मध्यात्पाटयामास दन्ती ॥ ८४ ॥ उत्फुल्लारादर्धचन्द्रेण लूने वक्रेऽन्यस्य नोधदग्रोष्ठदन्ते । सैन्ये कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गत सासिपाणे ॥ ८५ ॥ प्रत्यावृत्त भग्नभाजि स्वसैन्ये तुल्य शुक्तैरानिरन्ति स्म कश्चित् । एकौघेन स्वर्णपुङ्खैर्द्विपं त सिद्धा मायै साधुवादैर्द्वयेऽपि ॥ ८६ ॥ बाणाक्षिप्तारोहशून्यासनाना प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् । सरब्धाना भ्राम्यतामाजिभूमौ वारी वारै सस्मरे वारणानाम् ॥ ८७ ॥ कश्चिन्मूर्च्छामेत्य गाढप्रहार सिक्त शीते शीकरैर्वारणस्य । उच्छश्वास प्रस्थिता त जिघृक्षु व्यर्थीकृता नाकनारी सुमूर्च्छ ॥ ८८ ॥ लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णो । त्रेसे मुग्धै सैंहिकेयानुकाराद्रौद्राकारादप्सरोभिर्न चन्द्रे ॥ ८९ ॥ वृत्त युद्धे शूरमाश्लिष्य काचिद्रन्तु तूर्णं मेरुकुञ्ज जगाम । त्यक्त्वा नाग्रो देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासमर्था ॥ ९० ॥ त्यक्तप्राण सयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासु । प्राप्याखण्ड देवभूय सतीत्वादाश्लिश्लेष स्वैर कश्चित्पुरन्ध्री ॥ ९१ ॥ स्वर्गे वास कारयन्त्या चिराय प्रत्यग्रत्व प्रत्यह धारयन्त्या । कश्चिद्भेजे दिव्यनार्या परस्मिल्लोके लोक प्रीणय त्येह कीर्त्या ॥ ९२ ॥ गत्वा नून वैबुध सद्म रम्य मूर्च्छाभाजामाजगामान्तरात्मा । भूयो दृष्टप्रत्यया प्राप्तसज्ञा साधीयस्ते यद्रणायाद्रियन्ते ॥ ९३ ॥ कश्चिच्छस्त्रापातमूढोऽपरोऽदुर्लब्ध्वा भूयश्चेतनामाहवाय । व्यावर्तिष्ट क्रोशत सत्युरुच्चैरत्यक्तश्चात्मा का च लोकानुवृत्ति ॥ ९४ ॥ भिन्नोरस्को शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव । अन्योन्यानष्टम्भसामर्थ्ययोगादूर्ध्वीभावेन स्वर्गतावप्यभूताम् ॥ ९५ ॥ मध्येदण्डेरातपत्राणि भूमौ पर्यस्तानि प्रोढचन्द्रद्युतीनि । आहाराय प्रेतराजस्य रौप्यस्थालीनीव स्थापितानि स्म भान्ति ॥ ९६ ॥ रेजुर्भग्न वक्षसि कुङ्कुमाङ्का मुक्ताहारा पार्थिवाना व्यसूनाम् । हासालक्ष्या पूर्णकामस्य मन्ये मृत्योर्दन्ता पक्तिरक्तासवस्य ॥ ९७ ॥ निम्नेष्वोघीभूतमसृक्क्षतानामस्त्र भूमौ यच्चकासाचकार । रागार्थं तत्किं नु कौसुम्भमम्भ सन्ध्यानानाम तकान्त पुरस्य ॥ ९८ ॥ रामेण निसृष्टकृत्वो हृदाना चित्र चक्रे पञ्चक क्षत्रियास्रै । रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्सरयेऽसरया प्रावहन्द्वीपवत्य ॥ ९९ ॥ सदानान्तादस्त्रिभि शिक्षितास्त्रैराविध्याघ शातशस्त्रावलूना । कूर्मौपम्य व्यक्तमन्तर्नदीनामेमा प्रापन्नङ्गयोऽसृङ्मयीनाम् ॥ १०० ॥ पद्माकारैर्योधवक्त्रैरिभाना कर्णभ्रष्टैश्चामरैश्च हसै । सोपस्कारा प्रावहन्नस्ततोया स्रोतस्विन्यो वीचिषूच्चैस्तरद्भि ॥ १०१ ॥ उत्क्रान्तानामामिषायोपरिष्टाद्व्योमाकाशे बभ्रमु पत्रवाहा । मूर्ता प्राणा नूनमद्याप्यवेक्षामासुः काय त्याजिता दारुणास्त्रै ॥ १०२ ॥ आतन्वद्भिर्दिक्षु पत्राग्रनाद प्रासैर्दूरादाशु तीक्ष्णैर्मुखाग्रै । आदौ रक्त सैनिकानामजीवैर्जीवे पश्चात्पत्त्रिभूगैरपायि ॥ १०३ ॥ ओजोभाजा यद्रणे सस्थितानामादत्तीव सार्धमङ्गेन नूनम् । ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तार दीप्तजिह्वा वैवारी ॥ १०४ ॥ नैरन्तर्यच्छिन्नदेहान्तराल दुर्भक्ष्यस्य ज्वालिनावाशितेन । योद्धुर्बाणप्रोतमादीप्य मास पाकापूर्वस्वादमादे शिवाभि ॥ १०५ ॥ ग्लानिच्छेदि क्षुत्प्रबोधाय पीत्वा रक्तारिष्ट शोषिताजीर्णशेषम् । स्वादुकार कालखण्डोपदंश क्रोष्टा डिम्ब व्यध्वणद्व्यस्वनच्च ॥ १०६ ॥ क्रव्यात्पूर्णै पुष्कराण्येनकाना प्रेत्याशाभिर्मेदसो दारितानि । आभीलानि प्राणिन प्रेत्यवश्यन्कालो नून व्याददावाननानि ॥ १०७ ॥ कीर्णा रेजे साजिभूमि समन्तादप्राणद्भि प्राणभाजा प्रतीकै । बह्वारम्भैरर्थसयोजितैर्वा रूपे स्रष्टु सृष्टिकर्मान्तशाला ॥ १०८ ॥ स्वल्पनमुक्तविशिखैरशनिप्रकाशैरामूललूननवकेतककान्तदन्ता । त्रासावसन्नमदधारकपोलभागा सपादयन्ति करिण करिणीभ्रम न ॥ १०९ ॥ मिलितमिहिरभास मौलिमेतस्य दृष्ट्वा परवरतनुपादालक्तकं तर्कयन्त्या । त्वदरिघरणिजानिर्मानुबिम्बेन गच्छन्सुरनगरमृगाक्ष्या वीक्ष्यते साम्यसूयम् ॥ ११० ॥ भवत्तुरग

---

१ आमूलात् २ आयतम् ३ दण्डहस्ती ४ भज्यमानास्थिपटपटाशब्दयुक्तम् ५ बाणेन ६ बन्धनस्थानम् ७ वृन्दे ८ नत्कणे

१ उत्तरीयाणाम् २ नच ३ गुल्फदेशमधिकृत्य ४ सपरिकरा ५ मृतानाम् ६ पक्षिण , पक्षे,-बाणा ७ रौति स्म ८ कलेवरम् ९ भुक्तवान् १० मुखानि ११ तूर्याणाम् १२ तृणाभि १३ भयकराणि १४ अभ्यवहरन् १५ अवयवै

निष्ठुरक्षुरदद्धनर्गयचिता क्षणात्समरनिच्युतप्रतिनृपाञ्चलीचिता । इय रणधरा भवद्विरदमदानधाराजलैः किमु भर्गतलेऽर्पित वसनपट्टमासिश्वति ॥ १११ ॥ कृपाणकिरणानलै रुधिरनीरपूरच्छटाजटानततिसंकुलं भटतिमिङ्गिलैराकुलम् । प्रमथ्य समरार्णव परमवर्पि लक्ष्मीस्त्वया विधाय मदमन्थर मथनमन्दर मिन्धुरम् ॥ ११२ ॥ झणझणितकङ्कणक्वणितकिङ्किणीकं धनुर्ध्वनद्गुरुगुणाटनीकृतनराल्कोलाहलम् । वितत्य रिपतो गगनविरतस्फुरच्चुडयोर्निचित्रमभिवर्धते भुवनमीममायोधनम् ॥ ११३ ॥ प्रतीक्ष्यन्ते वीरा प्रतिनिर्भयमुरोभि सरमस निपतन्ता हेति प्रतिनियतधैर्यानुभवत निर्दीर्णत्वग्मांसादन्तिपिशितच्छिन्नधमनिप्रकाण्डास्थिस्नायु स्फुरत्तगविलक्ष्याग्रनिवहा ॥ ११४ ॥ गिरिवर्णारेके मूर्ध्नि भुवि परे तीक्ष्णनखरैः निपातात्स्येनाप्यहमहमिकाक्रान्तमनस । मिथो निघ्नन्ति स प्रवल्गत्समसमर्दविदलत्क्षितिक्षोद पिष्टातकसुरभिनक्षत्रटभृत ॥ ११५ ॥ मल्लैर्भिन्ना प्रतिनृपनय शङ्खनादानुदारश्रुत्वा रानपुनरपि भुजादण्डकण्डूतिमान । आलिङ्गन्त्याखिदशसुदृशो भूलता वीक्ष्य मुग्धा शापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥ ११६ ॥ मुक्ताद्भिर्मदवारि वारणगणैर्मेघायित कार्मुकैरेतैः शक्रशरासनायितमधरछन्नं शिलीन्ध्रायितम् । खद्योतायितमत्र वह्निसमुद्धतस्फुलिङ्गैः स्फुरत्नागचैश्चपलायित रणभुवा सैन्यैर्नमस्यायितम् ॥ ११७ ॥ भुजभ्रूयुगले रुषा समधिकस्मारणाक्षं क्षणात्स्वेदाम्भ पटलप्रवृष्टतिलकैर्दष्टाधरोष्ठैरपि । दष्टश्मश्रुभिरुत्पतद्भिरभित सकीर्णमालक्ष्यते त्वद्वलाग्रनिकृत्तैरिभटसुश्रेणीशिरोभिर्वियत् ॥ ११८ ॥ क्ष्वेडाभिकुम्भ भूपरनिकरैर्व्योम द्विधाखण्डितैर्देहैर्निक्षिपता धरातलमपि प्रच्छादयन्तीं चिरम् । धुर्यातेऽश्रुजलानिरीक्षणपथान्यन्तानरण्डोत्थरोमावानि सनेपथृन्यपि मुहुर्वर्म्माणि न पश्यताम् ॥ ११९ ॥ आशुशङ्क्षिरिपुवनु भरघटानिसीर्णकर्णज्वरव्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् । वेलद्भैरव भूरिमण्डनिरवैर्धीरो निधत्ते भुवनस्तृष्यत्करालकरालयवनिधराव्यास्र्यमाणा इव ॥ १२० ॥ नो चापाकर्षण न परिघरणं न व्यासमाकर्षणं नो बाहुस्फुरण न बाणगमनं सल्लक्ष्यते ते रणे । किंतु प्रौढकरीन्द्रकुम्भविगलन्मुक्तागणप्रस्फुरत्-त्वर्विक्षितिपालमौलिमणिभिर्विद्योतते भूरियम् ॥ १२१ ॥ वीराणां चण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डगण्डव्यापाराक्षिप्यमाणप्रतिभटनिकटाटोपदर्पप्ररूढ । कृट. कोऽप्येष युद्धाजिरभुवि जठरश्चित्रभूरगानुसारी लीयन्ते यत्र शत्रुप्रपतननिवहा कोटिश शस्त्रकीटा ॥ १२२ ॥ प्रासप्रोतप्रवीरोरःश्रणन्धिरपरानृष्टवृक्का निघस्राघावद्गृध्राधिराजाप्रतिमतनुमहच्छायया वारितोष्णा । विश्राम्यन्ति क्षणार्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा वीरा शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गा ॥ १२३ ॥ जीवाकृष्टि स चक्रे नृपमुनि धनुष शत्रुगर्सीकृतासुर्लक्षाशिर्मार्गणनामभवदरिचक्रे तद्यशसेन लब्धम् । मुक्ता तेन क्षमेति त्वरितमरिगणस्तत्क्षमाङ्क प्रतिष्ठा पश्चात्त द्वेषिमन्ये स्थितमवनिपतिर्नाप सन्धा तर स ॥ १२४ ॥ शुष्मद्दोर्दण्डमण्डल्यवनमितरणचण्डकोदण्डदण्डोन्मुक्तेषुच्छिन्नमूर्छत्प्रतिनृपनिभुजास्त्रग्दमुण्डावकीर्णा । गायद्भूतप्रवल्गद्रजनिचरवधूदत्ततालैः करालैर्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ १२५ ॥

---

## अरिपलायनम्

संलग्ना[1]ननयुक्तापि सालग्ना[2]ननवर्जिता । हारावरुद्धकण्ठापि विहा[3]रारिवधूस्तव ॥ १ ॥ निचरन्ति विलासिन्यो यत्र श्रोणिभरालसा । धूमकाकशिवास्तत्र धावन्त्यरिपुरे तव ॥ २ ॥ सकान्तदवकान्तारो यद्वैरिसुदृशामभूत् । जघनस्तनमुखैर्यो व्यलिखत्कण्टकैर्नखे ॥ ३ ॥ काठिन्य कुचयो स्रष्टुं वाञ्छन्त्य पादपद्मयो । निन्दन्ति विश्वधातार त्वद्वादीष्वारियोषित ॥ ४ ॥ वनेऽखिलकलासक्ता परिहृत्य निजस्त्रिय । त्वद्वैरिवनितावृन्दे पुलिन्दा कुर्वते रतिम् ॥ ५ ॥ वीर त्वद्रिपुरमणी परिधातुं पल्लवानि सस्पृहस्य । न हरति वनभुवि निजकररुहरुचिर्खचितानि पाण्डुपत्रधिया ॥ ६ ॥ त्वद्वैरिणो वीर पलायितस्य प्रकाशयत्नक्तमरण्यमार्गान् । कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो रिपुमन्दिरेषु ॥ ७ ॥ गजेन्द्रिपसे भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ता । अद्यापि किं वाऽनुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥ ८ ॥ इतस्ततः भद्विद्रुतवैरिभूभृत्प्रियाध दृष्टा वनमानवीजने । शशास पृष्टाद्भुतमात्मदेशे शीतद्विष शीतलशीलता किल ॥ ९ ॥ समस्तानीनाथमौले भवत्त परास्ता द्विष पद्मविस्तारिनेत्रा । नितान्त विहस्ता सहस्रारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥ १० ॥ अलसभुजलताभिर्नादृतो नागरीभिर्भवनदमनकाना नातिथिर्यो बभूव । त्वदरिनगरमध्ये सचरश्चैत्रजन्मा जरदजगरपीतः क्षीयते गन्धवाह[5] ॥ ११ ॥ त्वदरिनृपतिमानावासस धूलिधाराधवलमहह भिक्षुं वीक्ष्य भर्गभ्रमेण । सुरभिदुदधिवेलाकानन गाहमानो दिशति कुसुमबाण दूरतो निर्गमाय ॥ १२ ॥ त्वदरिनृपतिकेलीसौधसरूढदूर्वाङ्कुरकवलसिलोलं वीक्ष्य रङ्कु[6] सुयशो । उपवन

---

१ शस्त्रयुक्तमरण्यम्. २ अरकेन युक्तमानन यस्या ३ पक्षां गतिर्यस्या ४ व्याप्तानि ५ वायु ६ मृगम्

हरिणीनामुन्नतो भ्रूलताना प्रसरति रतिजानिर्भ्नानिजन्मा विवर्त ॥ १३ ॥ वर्षासु भीतमवगाह्निभुज भुजगमेक निगृ ■ शिरसि स्थितमञ्जनाभम् । शून्ये तवारिनगरे शबरी सशङ्कमादित्सते कनकमुष्टिकृपाणलोभात् ॥ १४ ॥ स्फुट तरमटवीना प्रान्तरे पयटन्ती हरिहतगजकुम्भोमुक्तमुक्ताफलानि । परिकलयति हस्ताम्भोजशोणप्रभाभि परिहरति च दूरा मञ्जु गुञ्जाभ्रमेण ॥ १५ ॥ ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते । अप्यङ्ग मुत्पुलकमुद्वहता सकम्प तेषामहो बत भिया न बुधोऽप्य भिज्ञ ॥ १६ ॥ कुरुबक कुचाघातक्रीडासुखेन वियुज्यसे बकुलविटपिन्स्मर्तव्य ते मुखासवसेचनम् । चरणघटनावन्ध्यो यास्यसशोक सशोकतामिति निजपुरत्यागे यस्य द्विषा जगदु स्त्रिय ॥ १७ ॥ अनारतपरिस्खलन्नयनवारिधाराशतप्रवृद्ध पथनिम्नगासलिलरुद्धयानोद्यमा । त्वदीयरिपुकामिनी बहुनिदेशयानैषिणी विनिन्दति बलदृशा गुरुरुषाश्रुप प्रावृषम् ॥ १८ ॥ इतश्चेतश्चाद्रिर्निघटिततर सेतुरुदरे धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम् । इदानीं निवृत्ते करितुरग नीराजनविधौ न जाने यातारस्तव च रिपव केन च पथा ॥ १९ ॥ क्षण कान्तागारप्रसरविलस मानसरति क्षण शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदय । क्षण पनध्यानश्रुति पुलकितो यद्भयभराद्धमन्नाशोऽरण्ये रिपुरवनिपालस्थिति मिय ॥ २० ॥ अये मातस्तात क्व गत इति यद्वैरिशिशुना दरीगेहे लीना निभृतमिह पृष्टा स्वजननी । करेणास्तस्य द्रुतमथ निरुध्याश्रुभृतया विनिश्वस स्फार शिव शिव दृशैवोत्तरयति ॥ २१ ॥ अपर्णेय भूभृद्वनमटति यल्का म्बरधरा जटालो दिग्वासा शिखरिणि शिवोऽय निवसति । इति भ्रान्त्यायोन्य क्षणमिलितयो क्षोणितिलक द्विपत्पत्यो स्ते शिव शिव शिवन्ति प्रणतय ॥ २२ ॥ पश्यैतच्छिबल चपल रे का त्वराह कुमारी हस्तालम्ब वितर हहहा व्युत्क्रम क्वासि यासि । इत्थ पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्ते कन्या कश्चित्फलकिसलयान्याददानाभिघत्ते ॥ २३ ॥ स्वल्प भ्रूम किमपि चरित वीरवर्य त्वदीय मिथ्यावादा कश्चय इति नो दु प्रवादो रुणद्धि । मुक्ता मुक्ता मलयशिखरे त्वद्विपक्षारयोधैरण्डभ्रान्त्या भुजगललना सादर पालयन्ति ॥ २४ ॥ क्षोणीपाल त्वदरिहरिणीलोचना शोचमाना गुञ्जाहार कुचकलशयोर्नि श्वसन्ती करोति । क्षुभ्यत्क्षीराम्बुधि लहरिसक्षोभिभिस्त्वद्यशोभिर्गौर मुक्ताफलमयमिवाविन्दते नन्दत या ॥ २५ ॥ विमुञ्चति पदे पदे रुचिरनीरहारादिक भुक्त गृहसमुत्सुर त्यजति चैव जीवाधिकम् । पलायनपरायणा तव विभो रिपोरङ्गना मुहुर्वलितकधर मिहिरमण्डल वीक्षते ॥ २६ ॥ धराधर तव द्विषा वनभुवा विहीनत्विषा दधे गुणनिधे धनुर्विगुणमप्यनेक गुणम् । फलाहरणयष्टिका करणक्दरान्त शिवानिवारणविहंगिकाकरणचुल्लिकाकर्षणे ॥२७॥ गजन्राजसुता न पाठयति मा देव्योऽपि तूष्णीं स्थिता कुब्जे भोजय मा कुमारसचिवर्नाद्यापि कि भुज्यते । इथ नाथ शुकस्तवारिभवने मुक्तोऽध्वगै पञ्जराच्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ २८ ॥ क्रामन्त्य क्षतकोमलाङ्गुलिगलद्रक्तै सदर्भा स्थली पादै पातितयावकैरिव गलद्बाष्पाम्बुधौतानना । भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना दावाग्नि परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ २९ ॥ तन्वीमुज्झितभूषणा कटगिर रोमोद्गम बिभ्रतीं वेपन्तीं व्रणिताधरा विवसना सीत्कारमातन्वतीम् । दोर्भ्या चण्डतुषारपातसभयामालिङ्ग्य कण्ठे भृश त्वा मूर्तिं दयितामिवातिरसिका त्वद्विद्विष शेरते ॥ ३० ॥ भूसर्परजोनिपातमलिना स्वस्थाद्दहारच्युता सामान्यैरपि जन्तुभि करतलैर्न शङ्कमालिङ्गिता । सल्मा क्वचिदेकतानुगता कापि प्रबुद्धा क्वचित्सुप्ता क्वापि च सारिवत्प्रतिगृह भ्रान्ता त्वयारिस्त्रिय ॥ ३१ ॥ कर्षद्भि सिचयाञ्चला यतिरसाकुर्वद्भिरालिङ्गन गृह्णानै कचमालिहद्भिरधर विभ्रामयद्भि करौ । प्रत्यक्षेऽपि भवद्विरोधिनृपतेरन्त पुराणामहो धिक्कष्ट विटपैर्विटैरिव वने किं नाम नो चेष्टितम् ॥ ३२ ॥ स्नाता प्रावृषि वारिवाहपटलै प्रोद्भूतदूर्वाङ्कुरव्याजेनात्तकुशा प्रणालसलिलैर्दत्वा निवापाञ्जलीन् । प्रासादास्तव विद्विषा परिपतत्कुड्यस्यपिण्डच्छलात्कुर्वन्ति प्रतिवासर निजपति प्रताय पिण्डक्रिया ॥ ३३ ॥ मौलिं मानविधि विना नमयितु हार स्वय गुम्फितु निर्यातु दयितस्य पाणिकमलच्छाया विना वर्त्मनि । निद्रातु च विनाङ्कपालिशयन द्रष्टु च शून्या दिश सरया त्वत्प्रतिवीरनीरजमुखी साकूत मभ्याप्यते ॥ ३४ ॥ भ्रात तालफलाशया स्तनतट बिम्बभ्रमेणाधरो दष्ट पाकविदीर्णदाडिमधिया लीढा स्फुरन्तो रदा । भ्राम्यन्ती भ्रमनि स्तुहानुविपिन त्वद्वैरिसीमन्तिनी निद्राणा मुहुराहृता मुहुरपि क्षिप्ता च शाखामृगै ॥ ३५ ॥ त्वत्प्रत्यर्थिवसुन्धरेशतरुणी सन्त्रासत सत्वर यान्तीर्गौर विलुण्ठितु सरभस याता किराता वने । तिष्ठन्ति स्तिमिता प्ररूढपुलकास्ते विस्तृतोपक्रमास्तासामुत्तरले स्तनैरतितरा लोलैस्पाद्वैरपि ॥ ३६ ॥ एतस्मिन्विजने वनेऽतनुतरुच्छायावकाशे सुख तिष्ठामीति तव द्विषामधिपतिर्यावद्विधत्त

१ ल क्षारम २ नत्र ३ भयात ४ स्तब्धा ५ अनिवर्तै ६ महद्भि

मन्ये देव तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि [1]संवर्धते ॥ १५ ॥ देव त्वद्भुजदण्डदर्पगरिमोद्दीप्तप्रतापानलज्वालापञ्जिमकीर्तिपारदघटी विस्फारिता कि देव । शेषाहि कति तारका कति कति क्षीरोदधि कत्यपि प्रालेयाचलशङ्खशुक्तिकरका कर्पूरकुन्दे देव ॥ १६ ॥ [2]भङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभटश्रेणी[3]निर्दुरुककाननेषु विलसत्यस्य प्रतापानल । अस्मादुत्पतिता स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारि[4]दम्भोलय ॥ १७ ॥ तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृता शङ्के यत्प्रतिबिम्बमम्बुधिपय पूरोदरे वाडव । व्योमव्यापिविपक्षराजकयशस्तारापरामावुक कासामस्य न स प्रतापतपन पारं गिरा गाहते ॥ १८ ॥ शम्भुर्मानससंनिधौ सुरधुनीं मूर्ध्ना दधानः स्थित श्रीकान्तश्चरणस्थितामपि वहन्नेता निलीनोऽम्बुधौ । मग्न पङ्करुहे कमण्डलुगतामेना दधन्नाभिभूर्मन्ये वीर तव प्रतापदहन ज्ञात्वोल्बणं भाविनम् ॥ १९ ॥ युष्मत्प्रौढतरप्रतापतपनज्वालावलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पय सागर । शम्भुर्जह्नुसुता दधाति शिरसा भूमिस्तुषाराचलतापव्याकुलित पतत्यतितरा भानु समुद्रे मुहु ॥ २० ॥ नार्य कुङ्कुमशङ्कया निटिलगं प्रोञ्छन्त्यपास्तद्विषा साध्यरागमसु विभाव्य गगने गच्छति केलीगृहम् । मुग्धा दावधियोऽरयस्तव विभो यान्ति द्रुतं कानने लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये ॥ २१ ॥ यो नास्ताचलमस्तक प्रति गतो दीनत्वमालम्बते यो नायाति निशासु संशयपद नोदेति गिर्याश्रयात् । यो राहोरपि कर्कशेषु दशनेष्वासीन्न वा गोचर सोऽयं भूप तव प्रतापतपनो वर्वर्ति सर्वोपरि ॥ २२ ॥ कान्तारे जलपूरवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो बाष्पैराकुललोचनैः प्रतिपदं रुद्धक्रमाश्चङ्क्रमे । पृथ्वीचन्द्ररुचे पटच्चरदशासंघट्टदीप्तप्रभ सिक्तं त्यञ्जलिसञ्चिताश्रुभिरलं युष्मत्प्रतापानलम् ॥ २३ ॥ अप्यायोधनवेदि मार्गणकुशानास्तीर्य सन्नस्रुचा हुत्वारे पललं चरुं हविरसृक्तं मस्तकस्वस्तिके । सवेष्याहवनीयमानसदसि

रयोऽसौ प्रतापानलोऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २४ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिनिशति क्षीराम्बुधि माधव । भर्ग स्वर्गधुनीं दधाति शिरसा त्यक्तत्रिलोकीकृतिर्वेधा किं तु मुहु कमण्डलुजलैरात्मानमासिञ्चति ॥ २५ ॥ श्रीमद्वीराधिवीर पृथुतरमहसस्त्वत्प्रतापाग्निकीटैश्छुरत्रान्ध्रे शोषं वाता शरणमनुगत कुत्रचित्कश्चिदेव । चन्द्र कीत्या सुधांशु त्रिदशतरुवर पाणिपद्म च कोशे लक्ष्मी [1]क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्तादृगन्ते ॥ २६ ॥ प्रागाक्रम्योदयाद्रिं [2]चरमगिरिमतिस्पर्धया तिग्मरश्मेर्मेरुं पयस्य लङ्कानगरमुपगत कौतुकान्मत्प्रताप । वीक्ष्याशु वीतिहोत्रं पुनरपि विपदं देव निश्चिन्वतीना य क्षोभो राक्षसीना क्षणमजनि स हि त्वद्द्विषा सर्वदास्ताम् ॥ २७ ॥ त्वत्खड्गाघातजातव्यथरिपुवनितामुक्तबाष्पाम्बुधारासारा[4]र्दारपाटुदाराद्दिशि दिशि सरितामुद्भवाश्चेद्भवेयु । कल्पान्तक्रूरकेलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारानपारानपि सपदि पय शुष्यत पूरयेत्क ॥२८॥ दुर्वारारातिवाजीवनदववदहनं कौङ्कुमो दिग्वधूना सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीप । त्वद्दोरुद्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरध्या वासो माञ्जिष्ठसुवारमणकुलमणे जागरीति प्रताप ॥ २९ ॥ भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलय निर्जलं किं न भूयात् । युष्मत्प्रस्थितिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीसूत्रस्रोतःसहस्रैर्यदिह परितश्चेन्न पूर्येत सद्य ॥ ३० ॥

---

## कीर्तिवर्णनम्

राजस्त्वत्कीर्तिचन्द्रेण तिथय पूर्णिमा कृता । मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ १ ॥ अस्थिवद्वधिनञ्चैव कुष्ठवत्पिष्टवत्तथा । राजंस्तव यशो भाति शरच्चन्द्रमरीचिवत् ॥ २ ॥ सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्ति किं कुपिता राजन् येन देशान्तर गता ॥ ३ ॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्ब्रह्मगोलक । विधत्ते कीर्तिकन्याया क्रीडाकन्दुककौशलम् ॥ ४ ॥ सिक्तं स्फटिककुम्भान्तः स्थितश्वेतीकृतैर्जलै । मौक्तिकं चेल्लता सूते तत्पुष्पैस्ते समं यश ॥ ५ ॥ अहो विशाल भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहसा वैरिवधूवदनभाजनस्थमपि ।

१ अनाथ भाव —वैरिस्त्रिय स्वभर्तृमरण यथा यथाऽधिक रुदन्ति तथा तथाऽधिक तन्नेत्राम्बुभिस्त्वत्प्रतापाग्नि संवर्धते त्वत्प्रतापो ऽधिको भवतीति यावत् यत स प्रतापाग्निर्वाडवानल । पितुर्लाडितश्च मातु समुत्पन्नस्तौ च पितरौ पानीययोगादेवोज्जृम्भेतेऽतस्त पुनोऽपि स्व प्रतापो भवद्वैरिरमणीनेत्राम्बुभि सिच्यमानो वृद्धिमाप्नोत्यतदुचितमेवेति २ पराजय ३ कालस्य भवनेषु ४ तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्त स्फुलिङ्गा उत्तिष्ठन्तीति वृद्धव्यवहार ५ हरनिटिलनेत्रम् ६ कुलिशम् ■ 'चतुर्युगसहस्र तु ब्रह्मणो दिनमुच्यते' इति

१ अर्चि २ गरलम् ३ अस्ताचल ४ धारासंपात ५ अपरिमित

पीतं हासक्षीरं व्यक्तीकृतमम्बुनीरं च ॥ ७ ॥ कुचकलशोऽम्बलानामलमथाथ पयोनिधे पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानोः करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्तिं कर्णौ हि तृप्तौ न च चक्षुषी मे । तयोर्विवादं परिहर्तुकामः समागतोऽहं तव दर्शनाय ॥ १० ॥ आकर्ण्य भूपाल यशस्त्वदीयं विधूनयन्तीह न के शिरांसि । विश्वम्भरामङ्गभयेन धाता नाकारि कर्णौ भुजगेश्वरस्य ॥ ११ ॥ यस्याञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापुः । अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठनाद्यशांसि ॥ १२ ॥ यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि । तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥ १३ ॥ इय यशांसि द्विषतः सुधारुचः किमङ्कमेतद्द्विषतः किमाननम् । यशोभिरस्याखिललोकधाविभिर्विभाविता धावति तामसी मसी ॥ १४ ॥ अङ्क समितिसमुग्रवीरयोर्नेतुरम्बुजाक्षम्बुमृणालहारिणी । द्विपदकुणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ अपि गरन्तीमपि देहगर्भाक्कीर्ति परेषामसतीं वदन्ति । स्वैरं चरन्तीमपि च त्रिलोक्यां त्वत्कीर्तिमाहुः कनय सतीं नु ॥ १६ ॥ करवालकरालवारिधारा यमुना दिव्यतरंगिणी च कीर्तिः । तव वामदं तीर्थराजं दूरादवलुनाति सरस्वती कवीनाम् ॥ १७ ॥ निजगदङ्गनलङ्घनलाङ्घिनैस्तव यशोभिरतीव पवित्रिता । प्रथमपार्थिवपुङ्गवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १८ ॥ त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीये सर्दर्भितुं विबुधनाम इव प्रवृत्ता । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ ॥ पृथ्वीपते शुभमते भवतो भवस्य श्रुमो वय सुयशसा कियदन्तरं वा । गौरी चकार गिरिशो निजमर्धमङ्गं गौरीकृतं च भवता भुवनं समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेहं मातङ्गसंगमकरी च दिगन्तवेश्म । त्यक्त्वाम्बरं भजति नन्दनमप्यगम्यं किं किं करोति न निर्गलता गता स्त्री ॥ २१ ॥ निर्मुक्तदोषधवलैरचलेन्द्रमन्थसम्भवदुग्धमयसागरगभीरैः । राजन्निद बहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती । गिरिगरिमनितम्बाच्छादने सावधाना तदपि च तव कीर्तिर्निर्मलैनेति चित्रम् ॥ २३ ॥ त्यजसि यदपि लक्ष्मीं कीर्तिमासाद्य दानैर्व्रजति तदपि कीर्तिः सिन्धुपारं न लक्ष्मीः । कथय क इह हेतुर्नारवेश त्वदीये वसति हृदयपद्मे नन्दसूनुर्मुरारिः ॥ २४ ॥ अनुक्षणमनुक्षणं क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश प्रबलकीर्तिरेकाकिनी । इय नियतमर्थिषु प्रतिदिनं वितीर्णा रमा जहाति न तवान्तिकं द्वितयमेतदत्यद्भुतम् ॥ २५ ॥ समुन्नतघनस्तनस्तबकचुम्बितुम्बीफलक्वणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ २६ ॥ वनेषु वनदेवता दिवि दिवौकसां वल्लभा भुजंगकुलकन्यका भुजगलोककेलीवने । यशः समरसञ्चितं नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥ २७ ॥ अपायि मुनिना पुरा पुनरमायि मर्यादयाप्यतारि कपिना पुरा पुनरदाहि लङ्कारिणा । अमन्थि मुनिवैरिणा पुनरबन्धि लङ्कारिणा नाम वसुधापते तव यशोम्बुधि क्षाम्बुधि ॥ २८ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पयःपारावारं परमपुरुषोऽयं मृगयते । कपर्दी कैलासं सुरपतिरपि स्वं करिवरं कलानाथं राहुः कमलभवनो हंसमधुना ॥ २९ ॥ कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३० ॥ पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्गः स्यादङ्गीकृततमःपतङ्गापह्नुदयः । यशोऽमुष्योपार्जयितुमसमर्थेन विधिना कथंचित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ३१ ॥ इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्व-

१ कम्पयन्ति २ पृथ्वी ३ शेषस्य ४ भुवनिगमृह ५ शाङ्खव्यानि ६ गुम्फितुम् ७ देवाङ्गना ८ नागलोकम्, पक्षे,–गणिकापरिसरेहम् ९ ऐरावतादीनामष्टदिग्गजानां समागमकरी, पक्षे,–चण्डालसंगमकारिणी १० दिक्पर्यन्तेषु, पक्षे,–विजनप्रदेशेषु ११ व्योम, पक्षे,–वस्त्रम् १२ सुरालयवनम् पक्षे,–पुत्रम् १३ गन्तुमशक्यम्; पक्षे,–गमनानर्हम् १४ निष्प्रतिबन्धत्वम्

१ पीतं २ अगस्तिना ३ मितं ४ तीर्णः ५ हनुमता ६ मथितं ७ बद्धः ८ क्षीरसमुद्रम् ९ विष्णुः १० शिवः ११ इन्द्रः १२ ऐरावतम् १३ चन्द्रम् १४ विधिः १५ यतः सर्वेषां समुद्राणां पर्वतानां गजानां सर्वभक्ष्याणां पक्षिणां च त्वत्कीर्तिधवलितत्वेन त्वत्क्षीराब्ध्यादीनामनवगमस्तेषामतस्ते तान्सर्वत्रावलोकयन्तीति भावः १६ तन्तुवायः, पक्षे,–कुं पृथिवीं विन्दति लभते सः १७ पटं वस्त्रं करोषि, पक्षे,–पटुं करोषि १८ तन्तु, पक्षे,–सद्गुण १९ नग्ना, पक्षे–स्तुतिपाठकाः २० कलङ्कः २१ दिग्गजानाम् २२ मुखानि २३ नीलिमा

दीये ॥ ३२ ॥ किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३३ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् । स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३४ ॥ अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितं काययष्टीनिकायम् । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ३५ ॥ कथमनिपतद्या यन्निशातासिधारादलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३६ ॥ समितिपतितनिपाताकर्णनद्रागदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ३७ ॥ सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्या गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ३८ ॥ देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीमुखोच्चैःश्रवश्चन्द्रैरावणकौस्तुभस्थितिमिवामन्यन्त दुग्धाम्बुधौ । किं त्वेकः पुनरस्ति दूषणकणो यन्नोपयाति भ्रमात्कृष्णः श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती ॥ ३९ ॥ इन्दुं निन्दति चन्दनं न सहते मल्लीस्रजं नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसस्तोमं विगृह्णाति च । श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्त्वदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा ॥ ४० ॥ इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः । स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गते त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ ४१ ॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते । चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ ४२ ॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्तामृगान्तादपि । दुग्धोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता ससार्णवा मेदिनी ॥ ४३ ॥ देव त्वद्यशसा सदा सुमहसा गीर्वाणवृन्देऽखिले शम्भोर्मौ वमर्पिते तु सहसा यत्कौतुकं तच्छृणु । साकूता सकुतूहला सचकिता सोत्कण्ठिता साद्भुता साशङ्का च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः ॥ ४४ ॥ किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः किंवा केसकसूचयः किमथवा चन्द्रोपलानां चयः । इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥ ४५ ॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये । उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम् ॥ ४६ ॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परैश्च चरणौ शौर्येण बाहुद्वयम् । दानेनापि करौ समीक्ष्य सकलं यस्याश्रया भूतलं स्थातुं चानवकाशता कथयितुं कीर्तिस्तु दूरं गता ॥ ४७ ॥ अस्योर्वीरमणस्य पार्वणविधुद्वैराशसंज्ञं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिप्रियं पर्यायं किमु दुग्धसिन्धुपयसां सर्वानुवादं किमु ॥ ४८ ॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च । त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः ॥ ४९ ॥ किं चित्रं भुवनानि पावयति यद्यत्राहितानां यशो हंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत् । आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधराञ्जलनिधींस्तुल्लङ्घ्य गच्छत्यपि ॥ ५० ॥ अर्धाङ्गाहितपार्वतीकीर्तिवनितादीव्यत्सिताभ्रभ्रमं कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् । विश्वव्याप्यविनाशि शंकरपदं यायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥ ५१ ॥ कृत्वा मेरुमुलूखलं गृहसता वृन्देन दिग्योषितां स्वर्गङ्गामुसलेन शालय इव त्वत्कीर्तयः कण्डिताः । तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्पविसरज्ज्योत्स्नाश्च तत्पांसवः ॥ ५२ ॥ कैलासीयति कैरवीयति लसत्कर्पूरपुञ्जीयति क्षीरोदीयति मौक्तिकीयति नभोगङ्गातरङ्गीयति । हंसीयति मानसीयति शरन्मेघीयति क्षोणिभृन्नाथीयत्यमृतीयति क्षितितले देव त्वदीयं यशः ॥ ५३ ॥ गङ्गीयत्यसितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति

१ दीपपूरक. २ समूह. यावत्तस्य कार्यैर्भवितव्यमिति भाव. ३ कायसंघातः. ४ अभिन्ना, अमरनिर्यामयोग्या इति यावत्. ५ कन्भद्रम्.

१ सन्नद्रम्. २ कैलासस्य. ३ केन्गमादपि शुभ्रम्. ४ रूपान्तरम्. ५ मवसाऽपि पुनरुक्ति.

भैरवीयति कुलं नीलोत्पलानां वने । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वं कुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसंघट्टतः ॥ ५४ ॥ पूर्णेन्दुः करकन्दुको हिमगिरिः क्रीडाविहारस्थली क्षीराब्धिर्गृहदीर्घिका प्रियसखी वाचा पतिर्देवता । शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते पाञ्चालीमिथुनं व्यधायि विधिना गौरीगिरीशावपि ॥ ५५ ॥

शंभुश्चन्द्रकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि भ्रान्त्या भूपतिभालभूषण भवत्कीर्तिर्भुवो मण्डले । यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशोर्व्यधादङ्घ्रिक्षालनमित्ययं निजमलस्तस्मिन्गतः स्मेरताम् ॥ ५६ ॥ एतत्कीर्तिनिर्णेजधौतनिखिलत्रैलोक्यनिर्वासितैर्विश्रान्तिः कलिता कथासु जरतां श्यामैः समस्तैरपि । जज्ञे कीर्तिभयादहो भयभरैरस्मादकीर्तिः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छाया वनन्य स्थितिम् ॥ ५७ ॥ त्वत्तेजःप्रतिभाभयादपसृता प्रत्यर्थिभूभृत्स्त्रियः कान्तारे घनकण्टकिद्रुमघनव्यस्तप्रयुक्ताम्बराः । आर्याणां पुरतस्त्रपापरवशा गच्छेयुरेताः कथं क्षौमाकातरया न चेत्परिणमेत्तत्तावकीनं यशः ॥ ५८ ॥ चन्द्रश्चन्दनमिन्दुरिन्दुरमणं पीयूषमीशादयो विश्वस्योपकृतावनेन महता ते तेऽवतारा धृताः । एतद्यन्न विद्यते त्रिभुवने न स्थानमेवंविधं जाने जङ्गमपारिजातसगुणं श्वेतेन पूर्वं यशः ॥ ५९ ॥ चन्द्राद्रूप्यकमण्डलोः समुदयद्धाराशुगङ्गाजलैर्ज्योत्स्नाचन्दनचर्चनैर्निकसितैस्ताराप्रसूनैरपि । एतद्विष्णुपदं किमश्वति भवत्कीर्तिर्महायोगिनी पूजामूर्तिविधायि लक्ष्म तुलसीदाम्ना कदाऽन्विष्यति ॥ ६० ॥

गङ्गासागरसंगमे कृतशतस्नाना बदर्याश्रमे स्थित्वासौ परिधाय तद्गुणमयं श्वेतं दुकूलं पुनः । प्राप्तं वेष्णवमैन्द्रमैश्वरमपि स्थानं स्पृशन्ती मुहुः कीर्तिस्ते पतिदेवता युगशतदीर्घायुराकाङ्क्षति ॥ ६१ ॥ अर्घोयाम्बुधिरिन्दुमण्डलमपि श्रीचन्दनं तण्डुलास्तारा बिल्वदलं नभः सुरधुनी धूपः प्रदीपो रविः । खेटाः पञ्चफलानि किंच ककुभस्ताम्बूलमार्तिक्यं मेरुः श्रीजगतीपते तव यशोयोगेश्वरस्यार्चने ॥६२॥ देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुपस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः । स्यादेवं त्वदगारसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रामग्रासमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ ६३ ॥ भोगीन्द्र प्रमदोत्तरङ्गसुरगीसर्गीतगोष्ठीषु ते कीर्तिं देव शृणोतु निशानिशतीं यच्चक्षुषा वर्तते । रत्नाभिः सुरसुन्दरीभिरभितो गीतं च कर्णद्वयीदुःस्थश्रोष्यति नाम किं स हि महसाक्षो न चक्षुःश्रवाः ॥ ६४ ॥ गीयन्ते यदि पन्नगीभिरनिशं त्वत्कीर्तयस्तद्वयं तुष्टाः स्म परन्तु चेतसि चमत्कारोऽयमारोहति । तासां तादृशभारमङ्गचलनासस्थानमदर्शिनि व्यालेन्द्रेऽप्यवधूतमूर्धनि मही चक्रं पुनर्भ्राम्यति ॥ ६५ ॥ यद्गन्धद्विपदानवारिभिरभूद्व्योमाङ्गणं पङ्किलं तस्मिन्वैरिकरीन्द्रमौक्तिकमयं बीजं च येनाहितम् । तस्मात्प्रादुरभूद्यशस्तरुरयं तस्योद्गता कोरकास्तारास्तेषु च पूर्णचन्द्रकपटादेकः उज्जृम्भते ॥ ६६ ॥ यत्कीर्तिर्नवलं भुवं सुनिर्मलं संपाद्य संचारतः श्रान्ता मेरुगिरिं विधाय सरितानाथस्य मध्यं हृदम् । आराध्यामृतभानुशेखरमलं संपाद्य तद्रूपतां गच्छन्ती त्रिदशालयं द्रुतगतिः शीतांशुना स्पर्धते ॥ ६७ ॥ शैलूषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो मेरुं वंशवरं परीत्य परितस्तूर्णं समारुह्य तम् । भ्राम्यन्ती परितः प्रनर्तितवनुर्मुक्तावलीर्भास्तिकैस्ताराभिस्तरलीकरोति गगनं भूमण्डलाखण्डल ॥६८॥ त्वत्कीर्तिं शशिनं समीपमगमत्कान्तिप्रतिस्पर्धया दृष्ट्वा तं च कलङ्किनं पुनरसौ स्नातुं जगामाम्बुधिम् । श्रुत्वा तं च घटोद्भवेन मुनिना पीतोज्झितं तत्पयः पुण्यं ब्रह्मकमण्डलुं कलयितुं ब्रह्माण्डमन्यं ययौ ॥ ६९ ॥ कैलासीयति केतकीयति हसत्कुन्दीयति प्रोच्छलत्क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति । पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते स्वर्गङ्गीयति शङ्करीयति भवत्कीर्तिः करीन्द्रीयति ॥ ७० ॥ निश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके मा कोशादिवशान्नपुंसकमिति ज्ञात्वावहेलां कृथाः । यज्जङ्घालधुरंधरेण धरणीनाथ द्विधा कुर्वता ब्रह्माण्डं विदधेऽमुना भवदरिक्षोणीभुजां निर्गमः ॥ ७१ ॥ रिङ्गत्तुङ्गतरङ्गसुन्दरसुधासिन्धुं तरत्युज्ज्वला रागाच्छम्पुरसदनभिसभं देवान्मुदालिङ्गति । क्रूराहीश्वरमाक्षिपत्यधिगृहं याति ध्रुवं भूपते साध्वीशब्दरता तथापि कुतुककीर्तिः प्रमत्ता क्षितौ ॥ ७२ ॥ कस्तूरी सितिमानमागतवती शौक्ल्यं गता कुन्तला नीलं चोलमभूत्स्मितं धवलिमा जातो मणीनां गणे । ध्वान्तं शान्तमभूत्समं नरपते त्वत्कीर्तिचन्द्रोदये त्रैलोक्येऽप्यभिसारसाहसरसः शान्तः कुरङ्गीदृशाम् ॥ ७३ ॥ स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदपूरोदरच्छायाहारिणि वारिणि धुसरितो दिक्पूरवि-

१ जले 'जीवनं भुवनं वनं' इति कोशः २ ऐरावणमिवाचरति ३ हस्तिनाम् ४ सरस्वती ५ त्वत्कीर्तिरेव कन्या तदर्थम् ६ पुत्रिका युगलम् ७ वैरिणाम् ८ कर्दम ९ अत्राय भावः — यच्चन्द्रान्तकालुष्यमवलोक्यते तत्पङ्किलभूभ्रमणेन कर्दमाङ्कितचरणया त्वत्कीर्त्या चन्द्रामृतकुण्डे स्वमलिनपादक्षालनतो जनितमिति अन्योऽपि हि यो देवनार्यं याति स जलपूर्णकुण्डे चरणौ प्रक्षाल्य याति तथेयमपीति १० त्रिलोक्याः ११ निष्कासितैः १२ वृद्धानाम् १३ श्यामवस्तुभिः १४ वस्त्रम् १५ यशोरूपस्य योगेश्वरस्य शिवस्य

भूतेश्वरो दोषानिष्टकरो न धर्मनिरत कीलाल्पो नासुर । नृणा पृष्ठपलाशनो न पिशुन शीघ्रंगमो नो हय शश्वद्रात्रिचरो न राक्षसगण. कोऽयं सखि ब्रूहि मे ॥ ३७ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशन सर्पो नैव विलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिता ॥३८॥ जाता शुद्धकुले जघान पितर हत्वापि शुद्धा पुन स्त्री चैषा वनिता पितेव सततं विश्वस्य या जीवनम् । सद्म प्राप्य पितामहेन जनक प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥३९॥

---

## अपह्नुतयः

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि तत प्रबुद्धासीत्यपूरयत् ॥१॥ रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २ ॥ सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिक किं मिलितो नहि नहि सखि हैमन पवन ॥ ३ ॥ बाले पयोधराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि बाले नहि नहि सखि पिच्छिल पन्था ॥ ४ ॥ प्रहरति न पञ्चबाण केवलमबले निमेषोऽपि । वर्षति पर न देव क्षणदायी विप्रयोगं ते ॥ ५ ॥ मधुरस्वना धृतोर्णा मण्याभरणा सुशोभना सुदती । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ गंगी भिनत्ति निद्रां तल्प न जहाति निष्ठुर दशति । चतुर किं प्राणेशो नहि नहि सखि मत्कुणव्रात ॥ ७ ॥ आदौ गृहीतपाणि पश्चादारूढजघनकटिभागा । नखसमुपलालनसुखदा सा किं रामास्ति नैव भो पामा ॥ ८ ॥ नाथ विलोकय मेघं नहि नहि पाप तवातिपुण्याया । नहि कथयामि पयोधरमपसारय कञ्चुकीमुरस ॥ ९ ॥ पञ्चदशीरजनिसमा तारामणिभूषणापि कोकिलाह्व । चन्द्रसमा गगनवसना हस्तगता स्त्री न मे वीणा ॥ १० ॥ नाथ मयूरो नृत्यति तुरगाननवक्षस कथं नृत्यम् नहि कथयामि कलापिनमिह सुखलापी प्रिये कोऽस्ति ॥११॥ अक्षरमैत्रीभाज सालङ्कारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वा चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया तया रहितया किं जीवनं प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ १५॥

---

## कूटानि

"केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागत । रुदन्ति कौरवा सर्वे हा केशव कथं गत ॥१॥ पानीयं पातुमिच्छामि त्वत्त कमललोचने । यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ विषं भुङ्क्ष्व महाराज स्वजनै परिवारित । विना कैर्न विना नाभ्यां कृष्णाजिनमवेष्टकम् ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणा शिखण्डिन । सीदन्ति मम गात्राणि माघमासे गवा इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अहं कथं द्वितीया स्याद्द्वितीया स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्कं बाण मुञ्चति राघवे । सरावणोऽपि मुमुचे मध्येरीतिधरं शरम् ॥ ६ ॥ शिरोऽर्पितपदद्वन्द्वा नासार्पितकरद्वया । अभूद्वक्रस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ सुवर्णस्य सुवे

---

(३७, ३८) मत्कुण (३९) जलवृष्टि यत सा शुद्धजलसमुदायभूतमेघादुद्भूय स्वजनना भोक्तारं मेघ विनाशयति, तथापि स्वयं शुद्धा सन्तत्यजलास्ति पितुरिव समस्तस्य जगतो जीवनं च भवति, सर्वैरपि समुद्रोदये शोषिते सति तस्मान्मेघोत्पत्तिर्भवतीति समुद्रो मेघपिता सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वनिनामहीभूतेन सागरेण सह नद्यादिद्वारा संगमं प्राप्य तेन तज्जल पर्षेभिश्च पुनर्मेघोत्पत्तय एव हेतुर्भवतीति जनक प्रासूतेत्यस्याभिप्राय

---

१ हेमन्तपवन २ सखि विना, पक्षे-उपगमनेन ३ पङ्किल ४ धृतोर्णं रक्षा, पक्षे,-धृतोर्णावस्त्रा ५ शोभना दन्ता यस्या सा, पक्षे,-दन्तिदन्तनिर्मितालंकारवती ६ मत्कुणव्रात, पक्षे,-रक्तकर्ण ७ कण्डूरोग ८ अम्बुदम्, पक्षे,-मेदपालम् ९ मेघम्, पक्षे,-स्तनम्

१ म उर इति पदच्छेद २ समीपे भातु योग्यया, पक्षे-अङ्कमारोढुं योग्यया ३ विवाह, पक्षे,-पाणौ धारणम् ४ कुलम्, पक्षे,-वेणु ५ जले ६ मृतवत्सम् ७ कृष्णकाक ८ भूतनाथ * यदि दासी असि नेच्छामि ना दासी असि तदा पिबाम्यहमिति पदच्छेद १० विगत पकारो यस्मात् ११ ककारेण विना १२ नकारद्वयरहितम् १३ कृष्णाजिनम् अत्र नकार पकारत्वरहितानां लघुत्वात्सने 'क आजि नम्' इति स्थिते संधौ कृते 'राज्यम्' १४ शत्रुरहितम् १५ 'माघमासे गर्वेंटी प्रोक्ता तदपत्यानि सेगव' इत्युक्त गर्भिण्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदीर्णानि भवन्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थ १६ हस्त भिन्नी १७ मध्यभागे रीति पित्तल तद्विशिष्टम्, पक्षे,-मध्ये रीकारविशिष्ट शरम् शरीरमित्यर्थ १८ 'अपस्मारपीडिता' १९ 'नासा दारुसर्पि स्थितम्' २० उष्ट्रालवर्णस्य २१ होकानामाभूषणानि यस्य तस्य

मिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥ २९ ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । न तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३० ॥ देवैराजो मया दृष्टो वारिवारणमस्तके । भक्षयित्वार्कपर्णानि विषं पीत्वा क्षयं गतः ॥ ३१ ॥ कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसाना कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३२ ॥ विना यौवनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयता पश्येत्युक्ते न दृश्यते ॥ ३३ ॥ विनायकपतेः शत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धं तव राजेन्द्र उत्तरार्धं तु वैरिणाम् ॥ ३४ ॥ कोलाकृतिरपारेवो मोरोहंसो जलोदरी । कंसारिरात्तलीलो वो धाघलो भूरुलोऽवतु ॥ ३५ ॥ रामेरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ३६ ॥ यथा नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥ ३७ ॥ मोमोरामममादंहे हयागदलनमधः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥ ३८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ३९ ॥ वासनावासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीना वासुदेव नमोऽस्तु ते ॥ ४० ॥ अविलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ४१ ॥ मुद्रदाली धृतव्याली कवीन्द्र वितुषा कथम् । भक्तवलभसंयोगाजाता विगलकञ्चुकी ॥ ४२ ॥ आश्रयाद्विष्णुधामाप्य विषमाश्वः करोत्ययम् । निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ ४३ ॥ केति ते कबरीभारः सुमनःसङ्गाश्रियेऽति नीलत्वात् । भेति च केलापवत्त्वान्निर्जरसेव्यैः कथं न स्यात् ॥ ४४ ॥ यानि विधोर्विम्मुदिते पुनरेष्यामीति यदुदितं भवता । जातं तु दन्तमेतं नेदं तत्त्वेन मुग्धवधूः ॥ ४५ ॥ अधुना मधुकरपतिना गिलितोऽर्थ्यपकारदंपती येन । त्रातः स पालयेत्त्वा

१ नतया नम्रीभूतया २ हे देवर! अजच्छाग ३ सेतु ४ पानीयम् ५ घास ६ रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षसानां कु पृथिवीं मारयति पीडयतीति कुमारः पृथ्वीपीडक इति यावत् तादृश संभवमुद्भव दृष्ट्वा तत्र तेषा नाशे मनोऽदधत् निश्चिका येत्यर्थः ७ यौ विना पक्षिणा गरुडेन वाहनेन वनमार्गेण जलमार्गेण क्षीराब्धाविति यावत् गच्छन्तौ स्तः, अत्र वाक्ये मया लक्ष्म्या सहितस्य हरेर्विष्णोः कृत्य लपितं प्रोक्तमस्ति, परं दर्शयता दर्शनं कारयन्ति तेषामग्रे पश्येत्युक्ते मत्यपि अविमृश्यकारिलक्ष्मीत्वं न दृश्यते न ज्ञायते ८ वीना पक्षिणा नायको गरुडस्तस्य पतिर्विष्णुस्तस्य ९ 'हिरण्यकशिपु' इत्यर्थः १० हिरण्य सुवर्णम् ११ कशिपुस्तल्पम् तव शत्रवो निद्रिता भवन्त्विति भावः १२ कंसारिः श्रीकृष्णो वो युष्मानवतु रक्षतु कथंभूतः कंसारिः? कोलाकृतिः, कोलकस्य सूकरस्य रूप यस्य स पु० कृ०, अपारेवः अपारे संसारे अवति रक्षति तथा. यद्वा,-अपारे समुद्रे वसतीति क्षीरमः; समुद्रशायीत्यर्थः पु० कृ०, मोरोहंसः माया लक्ष्म्याः उरो वक्षस्तत्र हंस इव हंसः पु० कृ०, जलोदरी जले उदके उदरं गृहं यस्यास्तीति सः पु० कृ०, आत्तलीलः आत्ता गृहीता लीला विलासो येन सः पु० कृ०, धाघलः धा निश्चयेन अघ हन्तीति सः पु० कृ०, भूरुलः भुवं धत्ते इति सः. १३ हे वरानने! अहं रामे अतिरमे कथंभूते रामे अतिरामे अतिक्रान्ता रामा येनासौ तस्मिन् अदाणि पु० कृ०, मनोरमे मनो रमयतीति तस्मिन् कथंभूतः अहम्? रामेराः राम एव रा द्रव्यं यस्य स यतः कारणान्मे मम सहस्रनामभिस्तुल्य रामनाम अत इति धारणात् । अथवा अहं रामे अतिरमे कथंभूते रामे? वरानने वरानन यस्यासौ तस्मिन् उत पार्वत्याः संबोधनं वा कथंभूतं रामनाम? सहस्रनामवत् सहस्रनाम तनोतीति सहस्रनामतत् 'रमन्ते योगिनो यत्र सत्यानन्दे चिदात्मनि । अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति १४ गानसरस्वती यथा कैलासं नगं नयति तथा न गङ्गा न सरस्वती नयतीति. १५ मोहः माया रागः मदः दम्भः मानं दुष्टः द्वेषः इति प्रथमाक्षरानुक्रमेण मदनम्

१ नवेन नम्रीभूतेन २ हे वासन वासयतीति वासनस्तस्य संबुद्धौ त्वं भुवनत्रयं अव रक्ष पालय कथंभूत भुवनत्रयम् सर्वभूतनिवासि सर्वाणि भूतानि निवसन्त्यस्मिस्तत् हे असुदेव प्राणेश्वर! इना वामदीनां वासित स्व अन्तं कुरु हे वासुदेव! ते तुभ्यं नमः अस्तु॥ अथवा असुवे न स्तौतीति असुत् तस्मै स्तोतुमशक्याय ... भिदां ददातीति वासुदेवः तस्य संबुद्धौ हे वासुदेव! अथवा वसुदेवशब्देन शुद्धं सत्त्वं तत्र भवो वासुदेवस्तस्य संबुद्धौ ते तुभ्यं नमः अस्तु अनूनं ददातीति असुदेवः, यद्वा, असूनां देयः असुदेवः हे असुदेव ॥ गणेश पक्षे,—हे सर्वभूतनिवासीन सर्वभूतैः सह निवासकारी रुद्रः स इन पितृत्वात्स्वामी यस्येति तथोक्तस्तथा हे अम्बासुद! अम्बा पार्वती माता तस्यै सुखं ददाति तथोक्तः हे पार्वतीनन्दनेत्यर्थः तथा हे इव इ मही वाति भक्तानुमहीतु प्राप्नोतीति तत्संबुद्धौ ते तुभ्य नमो नतिरस्तु त्वं भुवनत्रय त्रिलोकीं अवसि पालयसि कथंभूतं भुवनत्रयम्? अवासितम्. वास आश्रयो जातो यस्येति वासितम्, न वासितं अवासितम् निराश्रयमित्यर्थः. कया अवसि? वास एवाश्रय एव नौः दुःखसागरतारणाय हेतुभूता तरी तया कि०, सुदे शोभनमदे वरदानपरायणे वरसमूहे अर्थे इति शेषः ॥ हरिपक्षे,—हे इन स्वामिन्! तथा हे अम्बासुद अम्बावन्मातृवत् सु शोभनं ददातीति हे तथोक्त तथा हे इव ई लक्ष्मी वाति प्राप्नोति स इवः तत्संबुद्धौ यद्वा,-हे अम्बासुदेव इत्येकं संबोधनपदम्. अम्बा माता असुदः प्राणदाता पिता कथ्यते तयैव लक्ष्मी वाति प्राप्नोतीति हे तथोक्त. जगतां मातृत्वं पितृत्वं चेति संबोधनाभिप्रायः ते नमोऽस्तु ३ चन्द्रविभासिभिः कुमुदैरित्यर्थः ४ अवरे आभान. ५ आक्रान्तम् ६ समाश्व, सूर्यः इत्यर्थ. ७ संबोधन ८ पक्षानाम्. ९ क इव मत्रेव आचरति १० पुष्पाणाम्; पक्षे,-देवानाम् ११ अ इव विष्णुरिवाचरति. १२ भव ... शिव इवाचरति १३ कलापो भूषणं तद्वत्त्वात्; पक्षे,-कलापश्चन्द्रस्तद्वत्त्वात् १४ जरारहितैरलिभिः सेव्यः; पक्षे,-निर्जरैर्देवैः सेव्यः १५ देवे; पक्षे,-चन्द्रे १६ वृत्तान्तम्; पक्षे,-उदरान्तम् १७ इदं तत्त्वेन सत्येन पक्षे,-दन्तत्वेन दन्तरान्ततत्वेन. १८ अवगतो धुकारो यस्याधेन १९ मधुकरपतिर्नरपतिना. २० पकारद्वयो दंपती दन्ती सर्व-

निर्गतविकारो निनायको लक्ष्म्या ॥ ४६ ॥ उपरिगतं हि सवर्णं हत्वा करतो ददामि रन्तु मे । वन्य सरोजयुगलं त्यक्त्वा स्तनयुगमधारयत्कृष्ण ॥ ४७ ॥ अच्युतभक्तिवशादिह सममावस्त्वत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुत किंचित् ॥ ४८ ॥ मञ्जुलघौ समाचितगुणे क्वचि आपदाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ४९ ॥ अयि सखि शस्त सखिवत्पतिरिति किं त्व न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथ त्वयापि नावोधि ॥ ५० ॥ द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभाव । तत्पुरुष कर्म धारय येनाहं स्या बहुव्रीहि ॥ ५१ ॥ रवैद्विरहमसहमाना निन्दति बाला दिवा निश शंभुम् । राहुमपि रामचन्द्र रामानुजमपि च पवनगतिम् ॥ ५२ ॥ स जयति चित्रचरित्रो यस्य हि वैरच रणपुष्पस्रगेणु । मतिपीमूर्तिमिहल्य श्रानीतवदपि वृषो दये हेतु ॥ ५३ ॥ रविसुतरतगोकर्णं श्रुतिविषयगुणाम्बरो वनालमधर । नरकशिरा जगदखिलं विरमय्याद्ंसमरुत्पाणि ॥ ५४ ॥ सायकसहायवाहो मकरध्वजनियमितक्षमाधिपते । अब्जरुचिमाम्बरभे भावितगमननिप लोक ॥ ५५ ॥ वीताच्छीतिररिस्रोतर वो हरतान्महासुरीदयित । श्रीडमान्यानौका वार्वाहामोऽस्ममस्ताना ॥ ५६ ॥ लम्बोदर तव चरणानादरतो यो न पूजयति । स भवति विश्वामित्रो दुर्वासा गौतमश्चेति ॥ ५७ ॥ अम्बरमम्बुनि पत्रमगति पीतमहीनगणस्य ददाह । यस्य वधूस्तनय गृहमब्जो पातु स वो हरलोचनवह्नि ॥ ५८ ॥ वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोवलम्बिनी । तज्जैरिभगिनीपते सखा पातु मा कमललोचनो हरि ॥ ५९ ॥ अंततुच्चरपीडितामि बाले तव सौख्याय मतो ममोपैरस ॥ रसमर्पय वैद्यनाथ नाहं मनदावेदितलङ्घने समर्था ॥ ६० ॥ अंगुवेरपुरीविलोकन न धरासुतवर कदाचन । अथ तत्प्रतिकारहेतवेऽस्मयन्तीपतिलोचनं मम ॥ ६१ ॥ राम सीता लक्ष्मण जीविकार्थे विक्रीणीते यो नरस्त च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञ पण्डित त च

---

१ विगतो निगारो यस्मात्स निनायक, नायक इत्यर्थ २ कृष्णो राधिका पृच्छति उपरिगत सवर्ण समानवर्णं सरोजयुगल करतो हत्वा स्वहस्तेन आकृष्य मे रन्तु ददासि ततो राधया तस्मिन्दातु गृहीते सति सवर्णेन परिगत युक्त सुवर्णरहित एवाहम सरोजयुगल उरोजयुगलमेव इति धिया कमलयुग त्यक्त्वा स्तनयुगलमेव कृष्णो ऽगृह्णात ३ इ० संसारे अच्युतभक्तिवशात्त्वत्प्रसङ्गात्समभाव समत्व शत्रुमित्रादिषु तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमते श्रेष्ठबुद्धे पुस रति प्रीति अभ्युदयति इति न किंचिदद्भुतम् ॥ व्याकरणपक्षे,—भो अच्युतम अच्युता नष्टीना मा प्रतिमा यस्य तिङ्वशात् क्रियात्ययवशात् स प्रसिद्धो समाव मकारस्याभावो लोप भवतीति शेष सत्प्रसङ्गेन क्रियात्ययप्रसङ्गेन रमतेर्धातो सा रति अभ्युदयतीत्यपि नाद्भुतम् रमु क्रीडायामित्यस्माद्धातो क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूप सिध्यति ४ कापि विदुषितरा नायिका सखीं प्रति वदति अयि सखि! तत्र तस्मिन्नुपपतौ मम चेत स्पृहयतीति शेष कीदृशे? मञ्जुलघौ मञ्जु सुन्दर लघु चासौ लघुरित्यर्थ पु० की० समाचित गुणे समाचिता गुणा सौन्दर्यादयो यत्र पु० की० क्वचित्कस्मिंश्चिदपि न आपदाधारे आपद्रहिते इत्यर्थ अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे,—उपपतौ उपपतिशब्दे मम मनोऽस्ति, की० मञ्जुला घिसज्ञा यस्मिन् समाचित 'घेर्ङिति' इति गुणो यस्य ना इति पदस्य 'आङो नास्त्रियाम्' इति सूत्रनिर्दिष्टस्याधारे आश्रये अनीदृशे घिसंज्ञागुणनादेशरहिते केवले पति शब्दे ५ अयि सखि! पति सखिवत् शस्त मित्रवद्विश्वसनीय इति त्व किं न जानासि? सखी प्रत्याह—हे आलि! उपपतिर्जार अतिसखिवत् अतिशयितमित्रवत् शस्त इति त्वयापि कथ नावोधि ॥ व्याकरणपक्षे—पतिशब्द शस्त शस इति शस्त पञ्चम्यन्तात्तसि द्वितीयाबहुवचनात्पर सखिवत्सखितुल्यरूपो ज्ञेय नादेशाभावेन कार्यत्वात् उपपतिशब्द शस्त द्वितीयाबहुवचनात्पर अतिसखिशब्दवत् नादेशभाक् ६ मत्र स्त्रीपुरुषरूपद्वन्द्वात्मक ७ द्वौ गावौ यस्य ८ भावो वस्तुमात्रम् अव्ययी व्ययाभाववान् मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थ यद्वा अव्ययीभवन अव्ययीभाव ९ तत्प्रसादे पुरुष! येनाह बहुव्रीहिर्बहुधा धनविशिष्ट स्या तत्कर्म धारयेत्यर्थ समासषट्कप्रतिपादनमत्र चित्रम् १० मन्मथवर्धकत्वाच्छम्भुम्, चन्द्रावरोधकत्वाद्राहुम्, मत्स्याश्रयनिशेषणाद्रामचन्द्रम् । मन्मथजनकत्वाद्रामानुजम्, वायुमक्षिसर्पहननात्सर्पगारातिं गरुडमित्थिलवतीति भाव

१ वर श्रेष्ठो वत्सरथस्रलस्रज की रेणु- २ कपिश्रेष्ठस्य गौतमस्य पत्नीम् ३ वृष सुकृतम् ४ उल्कस्त्वचरणाङ्गुष्ठाग्रो गज सिंहस्य पिपी नवयामास वृषो वृषभस्तस्योत्ये हेतुरिति चित्रम् ५ न समोऽसमो विषम स चासौ रक्तश्च समरक्त शरो विषमनि लयुधविशेष ॥ पाणौ हस्ते यस्य स शूलपाणि शिव इत्यर्थ- ६ खड्ग ७ समुद्र ८ चन्द्र ९ यश १० वाताच्छीति वान भवति स वातात् शेषस्तस्मिन्शीति शयन यस्य स अरिस्र अरि चक्र धरति स वार्वाहाम वार्वाहो मेघस्तस्येवाभाति स अस्रमस्ताना अस्रमस्त खण्डित अन शकट येन स नौका न सूर्यं ओक निवासस्थान यस्य स ईदयित ई लक्ष्मीस्तत्पतिर्विष्णुरर हुत वो युष्माक श्रीडमान्या श्रीडयन्ति ता मानाजयावहाश्च ता मान्या अज्ञानकृतसंसारभ्रमणानि ता मत्तदीर्घरवादिति ११ नाग शत्रु १२ मलिनवृक्ष १३ पशु १४ स कृष्णो वो युष्मान्पातु यस्याम्बरं पीतम् यस्य गृहमम्बुनि यस्य पत्र वाहन अहीनगणस्यारातिर्गरुड यस्य वधूरब्जा कमला यस्य तनय हरलोचनवह्नि ददाह १५ वायुमित्रमग्निस्तत्सुत षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहन मूषकस्तदराति सर्पस्तद्भूषण शिवस्तच्छिरोवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्या पतिरर्जुनस्तत्सखा कृष्ण- १६ महान्, पक्षे,—काम- १७ लङ्घनम्, पक्षे,—मनीनसिति- १८ भेषजम्, पक्षे,—प्रीतिम् १९ दर्शनाय, पक्षे,—उद्बहने २० अनलका विषन्नेत्यर्थ २१ महत्कारकम् २२ अनललोचन शिवम् २३ 'जीविकार्थे चापण्ये' इत्यत्र अपण्ये इत्युक्तत्वाद्धर्मिकान्विक्रीणीते इत्यत्रैव रामक सीतका लक्ष्मणक इति प्रयोगा एव साधव-

धिग्धिक् ॥ ६२ ॥ गोगंजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नजशत्रो । वाहनवैरिकृतासनतुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ६३ ॥ नदीज लङ्केशवनारिकेतुर्नगाह्वयोनाम नगारिसूनु । एषोऽङ्गनावेषधर प्रमाथी जित्वाद्य य नेष्यति चाद्य गा व ॥ ६४ ॥ गोकर्णगडाभरण यदीय यद्धव्यहव्यादजमादाह । कु भेनचूडामणिरादिगन्तात्पायादपायादुरगात्मजार्ध ॥ ६५ ॥ विलासिनी काञ्चनपट्टिकाया पौटीरपङ्कैर्निरही विलिख्य । तस्या कपोले व्यलिखत्पवर्ग तवर्गमोष्ठे चरणे टवर्गम् ॥ ६६ ॥ काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितु लिलेख । बाह्वोर्भुजग हृदि राहुबिम्ब नाभौ च कर्पूरमय महेशम् ॥ ६७ ॥ नेतप्रयाणोन्मुखता समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणा सख्यापरोऽभूत्सखि कोऽत्र भाव ॥ ६८ ॥ गौरीक्षेण भूधरजाहिनाथ पत्र तृतीय दयितोपवीतम् । यस्याम्बर द्वादशलोचनाख्य काष्ठा सुत पातु सदाशिवो व ॥ ६९ ॥ पुष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृज विलोक्य । नाभीसरोजे नयन मुरारेर्वामेतर वारयति स्म चित्रम् ॥ ७० ॥ भृङ्गत्रय भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलषट्क प्रमदालताया पृच्छन्ति मध्य विदुष कवीन्द्रा ॥ ७१ ॥ इन्दीवराक्ष्या स्फुटविद्रुमोष्ठ्या सकेतमुद्दिश्य वने चरन्त्या । चोरै समस्ताभरणानि हृत्वा नासामणिर्नोऽपहृत किमेतत् ॥ ७२ ॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूते क्रियते भरेण । कण्ठे कुठार कमठे ठकार शेषे ढकारस्तपने चकार ॥ ७३ ॥ कुम्भेनसुप्रीनयनाश्रयाशदग्धोन्मदा दर्दुरहर्षकाले । स्वंदममक्षप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाज ॥ ७४ ॥ शिरसि देवनदीं पुरवैरिण सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ ७५ ॥ काचिद्विलोलनयना रमणे स्वकीये दूर गते सति मनोभवबाणखिन्ना । त्यक्तु शरीरमचिरान्मलयाद्रिवातसौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ७६ ॥ कीता सर्वे

१ गवागच्छतीति गोग शिवस्तज्ज कार्तिकेयस्तस्य वाहन मयूरस्तस्य भोजन भक्ष्य सर्पस्तस्य भक्ष्य वायुस्तज्जातो हनूमास्त पातीति स तस्य सुग्रीवस्तस्य मित्र रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहन ऐरावतस्तस्य वैरी सिंहस्तत्रोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मा पातु रक्षतु २ भो नदीज गङ्गातनय भीष्म । एष दृश्यमान अङ्गनावेषधर स्त्रीरूपधारी लङ्केशवनारिकेतु रावणवनभञ्जकहनूमध्वज नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्र भो भो कौरवा । अद्य प्रमाथी इ ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थ ३ उ शिव तु धरणि अपायादुरगात्मजार्ध रक्षतु स क गोकर्णा सर्पास्तेषा राड् वासुकि यदीय आभरणम् हूयते तद्धव्यम गौरिद गव्य, गव्य च तद्धव्य च गव्यहव्यम् गव्यहव्यमत्तीति गव्यहव्याद् वह्नि यस्य शिवस्य गव्यहव्यादह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थ स अजम् अनङ्ग आददाह यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्नि मदन भस्मीचकारेत्यर्थ किंभूत भाना नक्षत्राणा इन स्वामी चन्द्र स एव चूडामणिर्मुकुटरत्न यस्य स पु० क० अगात्मजा पार्वती अर्धे अर्धं वा यस्य स आदिगन्तात् दिगन्तेभ्य आ इति दिगन्तमर्यादीकृत्य आदिगन्त तस्मात् ४ चन्दनद्रवे ५ गङ्ग ६ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्या तव चुम्बन करिष्यामीति सूचितम् ७ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम् ८ टवर्गस्य मूर्धस्थानत्वाद्यदि त्व रुष्टासि तर्हि त्वा शिरसा नमामीति सूचितम् ९ मरणासन्नमनीत्या प्राणा स्वतो न निर्गमिष्यन्तीत्यन्येन बाह्वोर्भुजग लिलेख चन्द्रश्च समागतया सुविसिद्ध भूत्वा मनो मदीयमगच्छेदित्यन्येन हृदि राहुम्, मन्मथप्रसादिति च लिलेखेति भाव १० नक्षत्रमालाधारणेन नक्षत्रोदयवेलाया नन्वत्र कालमिति तया सूच्यते वासरसख्याकरणेन सप्तदिननन्तर एव मया गन्तव्य इति तेन सूचितम् ११ स सदाशिवो वो युष्मान् पातु । यस्य गौ वृषभ पत्र रथ तथा ईक्षण तृतीय यस्य भूधरजा पार्वती दयिता यस्य अहिनाथ शेष उपवीत यस्य अम्बर यस्य काष्ठा दिशो यस्य द्वादशलोचनाख्य कुमार सुतो यस्य इत्यन्वय.

१ पुष्पेषोर्मदनस्य माता लक्ष्मी पुरुषायमाणा पुरुषवदाचरन्ती विपरीतरत कुर्वतीत्यर्थ, विश्वसृज भगवन्नाभिसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिण नयन वारयति स्म यतो भगवद्वक्षि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोज मुकुलित भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत् इति मनसि कृत्वा तद्वारयामासेति भाव २-३ उपरि अक्ष्णो नीलच्छाया अधस्तादोष्ठस्य रक्तवर्णच्छाया तयो प्रतिबिम्बितं नासामौक्तिक गुञ्जाफलमिति मत्वा चोरैर्न हृतम् इत्यभिप्राय ४ नृसिंहदेवे सैन्यैर्भरेण सह यात्रार्थं चलति प्रत्यर्थिभूते शत्रुभूपतिभि सेनाभि सह पलायमानैर्भरेण साध्वसाधिक्येन कण्ठे कुठार क्रियते कुठारधारतुल्या पीडानुभूयते तथा च भरेण सेनासमूहगुरुत्वेन कमठे ठकार क्रियते भूभरधर कूर्मावतारोऽतिसमर्दभीत्या पाणिपादमुखसकोचेन ठकारतुल्योऽभूत् तथा केवल मण्डलाकृतिस्तस्थौ तथा शेषोऽपि एकस्मिन्नेव भुव प्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलीभूत तपने सूर्ये च चकार समुच्चय क्रियते अतिभीत्या तेषा शत्रूणा सूर्यं नभस्तले पश्यता इत्यर्थ ५ कु पृथ्वी धरतीति कुभृत् पर्वता तेषा इन स्वामी हिमाचलस्तस्य सू पुत्री पार्वती ता भीरूणा भीमैर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन दग्धो य कन्दर्पस्तेन उन्मदा उन्मत्ता ६ दर्दुराणा मण्डूकाना हर्षकालो वर्षाकाल ७ स्वसाञ्ज स्वसमुत्पन्नानि तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति स्वजभक्षा सर्पास्त एव प्रिया भोजनस्य आशा येषा ते मयूरा इत्यर्थ ८ अत्र भीमानुजगोजभाज इत्यस्य भीमानुजोऽर्जुनस्तस्संज्ञका ये गोजा गो पृथिव्या जायन्ते ते गोजा वृक्षास्तत्फलत्वेन स्फुटितार्जुनवृक्षा येनाधिष्ठिता इति यावदित्यर्थ स्वा टीका रमणमण्डनेऽपि न्यूनैव ९ सविषे गले १० मलयस्थचन्दनवृक्षसर्पनिश्वासाच्छूसर्शरूक्षस्य वायो सविषत्वात्तत्पानेन तस्या मरण स्यादिति बुद्ध्या न पपाविति गूढाशय. ११ कान्ता हारे रुचि धत्ते, मुनिजनो हरे रुचि धत्ते, अवियोगी तरुणो हिमकरे रुचि धत्ते कामो मकरे निजचिह्नभूते रुचि धत्ते, रमणीजनस्तु करेण मकरे कुचभूषणेन सह पयोधरयुगे च रुचिं धत्ते

मुनिजनस्तरुणोऽवियोगी कामश्च रत्नमणिरुज्ज्वलकङ्कणेन । धत्ते पयोधरयुगे कुचभूषणेन हारं हरं हिमकरं मकरे करे च ॥ ७७ ॥ विकसति नयनाभ्यां कैरवं पङ्कजं च क्षपयति चरणाम्बु ब्रह्मचर्यं पयोधेः । उरसि लसति यस्य श्रेयसां संप्रदायः स फणिनमधिशेते पद्मया पद्मनाभः ॥ ७८ ॥ अहिरिपुपतिकान्तातातसंबद्धकान्ताहरतनयनिहन्तृप्राणदातृध्वजस्य । सखिसुतसुतकान्तातातसंपूज्यकान्तापितृशिरसि पतन्ती जाह्नवी नः पुनातु ॥ ७९ ॥ उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽनिप्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यत्तदियमिति च वक्तुं कः क्षमः पण्डितोऽपि ॥ ८० ॥ हरिद्वियां राहुप्रसरपिहितेच्छापरिषदि प्रयुक्तालंकृत्यं विधुत उन्नता दुर्गकुरुटीम् । यय मार्वोपेनाः प्रहर इति सेनाधिपकृताममात्येभ्यो लेख्या प्रतिदिशति सिंहक्षितिपतिः ॥ ८१ ॥ गता सा किं स्थानं पथि सह तया का स्थितवती नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती । विलोक्यालंकारं निजमथ च शाकं नरपतिं निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ८२ ॥ सेनान्ते नो हारो रजतगिरिमूले न धनदः सुकेशीनां मध्ये विहरति न कामो नवयुवा । रसान्ते नैवाब्धिर्विधुधनगरीसीम्नि न सुरस्तथाप्यस्मिन्येषे स्फुटमनतु दैवं किमपि नः ॥ ८३ ॥ काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं सा तन्मूले समयमलिखद्व्यालकन्योपरिष्टात् । गौरीनाथं पवननयं चम्पकं चास्य भावं पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥ ८४ ॥ सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम् । द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥ ८५ ॥ चञ्चद्द्वादशनीरनीरजयुतं सप्ताम्बुजोद्भासितं नित्यं षोडशशोणपद्मरुचिरं धात्रानिशं सेवितम् । क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्वः कमलाङ्कसङ्क्रिशयनं तन्नीऽरोचिर्महः ॥ ८६ ॥ रामं वानरवाहिनीं पुररिपुं राहुं रवेः सारथिं कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम् । तन्वीं नूतनपल्लवैर्विरचिते शय्यातले शायिनी सख्या वीजितना-

[1] स पद्मनाभः पद्मया सह फणिनं शेषमधिशेते यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्यां कैरवं पङ्कजं च विकसति यस्य चरणाम्बु गङ्गाजलं पयोधेर्ब्रह्मचर्यं क्षपयति दूरीकरोति गङ्गायाः समुद्रपत्नीत्वात्, उरसि श्रेयसां समुदायः कौस्तुभमणिर्लसति, एवंविधः पद्मनाभः फणिनमधिशेते २ अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तातः समुद्रः स सम्बद्धो येन स रामस्तत्कान्ता जानकी तस्या हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमांस्तस्य ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतः मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उषा तत्तातो बाणासुरस्तस्य संपूज्यः शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी भागीरथीत्यर्थः ३ सिंहक्षितिपतिः सेनाधिपकृतां लेखां अमात्येभ्यः प्रधानेभ्यः प्रति दिशति कथयति इति लेखां प्रतीति किम् यय मार्वोपेनाः यशब्देन इन इष्यते प्रयुक्तः इनः सेनोपेना हरिद्वियां वैरिणां राहुप्रसरपिहितेच्छापरिषदि सत्याम् राहुशब्देन वनः, पिहितशब्देनाच्छादनम्, इच्छाशब्देन आशा दिशा, परिषच्छब्देन मण्डलम् प्रयुक्तो योऽलंकारः शरः तस्य कृत्यं प्रहारादिकं विधुत उन्नताम् गवरलस्य उच्चत्वं शिखायुक्तानां पक्षाणां विशिखानाम् दुर्गकुरुटीम् कुरुटीशब्देन नगरी लक्ष्यते दुर्गनगरीं प्रहर इत्यर्थः ४ कश्चिद्राजा काचिन्नायिकां स्वगृहमानयत् तत्रश्च तद्दर्शनलोभेन दृष्ट्वा तां स्वगृहं प्रापयितुं दूतीमाज्ञापयति स्म सा च दूती तां स्वगृहं प्रापय्य पुना राजनिकटमागत्य स्थितवती तां प्रत्याह राजा सा किं स्वस्थानं गता गतवत्या तया सह पथि मार्गे का स्थितवती एवं राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलंकारं 'पोहोंची' इति महाराष्ट्रभाषाप्रसिद्धं तथा शाकं 'मेथी' इति महाराष्ट्रभाषाप्रसिद्धं शाकविशेषं चावलोक्य तावन्मात्रेणैव नरपतिं निराकाङ्क्षमुत्तरविषये आकाङ्क्षारहितं चक्रे एतदलंकारशाकावलोकनं कथं प्रभवति राज्ञो नैराकाङ्क्ष्यसंपादने कथं समर्थं भवतीति कथयेति कविप्रश्नः अत्र प्रथमप्रश्नस्य प्राप्तेत्यर्थकं 'पोहोची' इति हिन्दीभाषयोत्तरम् द्वितीयप्रश्नस्य तु अहमासमित्यर्थकं 'मे थी' इति हिन्दीभाषयोत्तरमिति तात्पर्यं बोध्यम्।

१-२ प्रियनिवासम् ३ करण्टस्थितपुष्पसौरभ गन्धवाहो हरेदिति तद्रक्षणं उपरं ४ पुष्पवाणो बाणार्थं हरेदिति तद्रक्षणं शिवम् ५ एवः पुष्प स्मरे । शोषयेदिति जन्मकाले एव सद्यस्तुष्टा हर्तुं प्रवृत्तं सपक्षनाय हनूमन्तम् ६ तन्मकरन्द भृङ्गो हरेदिति चम्पकमलिखदिति भाव चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धेः ७ एवं भवतः सन् बहुधा वारंवार दीयते दीयते इति वदसि दायते इति रूप चतुर्णामपि दाधातूनां सदृशं भवति तन्मध्ये द्वौ दानार्थौ; डुदाञ् दाने, दाण् दाने, दैप्. एक. पालने, देङ् रक्षणे इति एकः खण्डने, दोऽवखण्डने इति एत-न्मध्ये भवान्कस्य धातोः प्रयोगं कृत्वा वदति त न जानीमः ८ तन्नीरोचिः श्यामप्रभं महस्तेजः कृष्णलक्षणं वो युष्मान्पायात् तत्किंभूतम् कमलाङ्कसङ्क्रिशयन लक्ष्मीसनाथ शयनम् पु० किं० सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रफणदिव्यशयनशेषस्थितम् पु० किं०. क्षीराम्भोधिगृहं दुग्धसमुद्रनिवासम् पु० किं०. धात्रा नाभिसरोरुहस्थेन ब्रह्मणा अनिशं सेवितमध्यासितम् पु० किं० षोडशशोणपद्मरुचिरं षोडशरक्तकमलमनोहरम् षोडशशोणपद्मानां विवृतिः—विष्णोश्चत्वारो हस्ताः द्वौ चरणौ तावन्त एव ब्रह्मणः द्वौ करौ द्वौ चरणौ लक्ष्म्याः इत्येवं षोडशशोणपद्मरुचिरम् पुं०कि०. नित्यमविनाशि पु० कि०. सप्ताम्बुजोद्भासितं सप्तकमलशोभितम् सप्ताम्बुजानां विवृतिः—चत्वारि मुखानि ब्रह्मणः एकं नाभिसरोरुहम् एकं विष्णोर्मुखम् एकं लक्ष्मीमुखम् इत्येवं सप्ताम्बुजोद्भासितम्. पु० किं०. चञ्चद्द्वादशनीरनीरजयुतं शोभमानद्वादशनीलोत्पलयुक्तम्. द्वादशनीलनीरजानां विवृतिः—अष्टौ नयनानि ब्रह्मणः द्वे विष्णोः द्वे लक्ष्म्याः इत्येवं द्वादशनीलनीरजयुतम् ९ कोकिलरक्षककाकावशेषकत्वाद्रामम्. मत्स्यावशेषाद्वानरवाहिनीम् मन्मथावशेषात्पुररिपुम्, चन्द्रावशेषाद्राहुम्. रवेः सारथिसादृश्यात्पादनादरूपम् चन्द्रोत्पादकसमुद्रावशेषादगस्त्यम्. मन्मथोत्पादनान्मुररिपुमिति निन्दतीति भाव । कोकिलादीनां कामोद्दीपकत्वं रसशास्त्रे प्रसिद्धम्.

भ्रमन्त्यत्र प्रत्यक्षेऽपि क्रियापदे ॥ ११ ॥ नारसिंहाकृतिं वीक्ष्य वने मत्तमतंगजः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १२ ॥ संध्यावन्दनवेलाया तडागान्ते द्विजोत्तमैः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १३ ॥ पुंस्कोकिलकुलसैते नितान्तमधुरारवैः । सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ १४ ॥ विम्बाकारं सुधाधारं कान्तावदनपङ्कजम् । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १५ ॥ राघवस्य शरैर्घोरैर्घोररावणमाहवे । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १६ ॥ पामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित । यदि ते जीवितसेच्छा तदा भोः शीतलं जलम् ॥ १७ ॥

## कर्तृगुप्तम्

गौरीनखरसादृश्यश्रद्धया शशिनं दधौ । इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ १८ ॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च । ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १९ ॥ राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २० ॥ श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २१ ॥ व्ययवासाः पञ्चशिरा यरिर्वीनारिभूषणः । असिरोमा क्रियादुर्वैः शङ्कलायनवीक्षणः ॥ २२ ॥ व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च । कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ २३ ॥ न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् । रञ्जयति महीमखिला तथापि धीरस्य वीरस्य ॥ २४ ॥ शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् । यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ २५ ॥

(११) 'प्रत्यक्षेपि' क्षिप्ता (१२) गज' सिंहस्याकृतिं वीक्ष्य 'नार' न जगाम. क गतौ. कर्तरि लिट् (१३) हे द्विजोत्तम 'ऐः' आगच्छ (१४) 'अधु.' दधति स्म (१५) पूर्वोक्त कान्तावदन 'दश' चुम्बस्वेति. (१६) हे राघव! त्वं रावणं आहवे शरैः कृत्वा 'स्म' मारय इति. (१७) भो श्लेष्मव्याधिनिपीडित! यदि जीवितस्येच्छा तर्हि शीतलं जल 'मा पा.' मा पिबेति. (१८) इः कामस्तं हन्तीति 'इहा' ईश्वर इति. (१९) हे ब्राह्मण! 'इभ्य.' समृद्धः. (२०) राक्षसानां इभ्यः स्वामी रावण'. जनकस्य सुता सीता हृत्वा पुरीं लङ्का ययौ (२१) श्यामौनवः कृष्णमार्जारा' (२२) 'उ' महादेव. (२३) उ., शिव' इ ब्रह्मा अः विष्णु' इत्यनेन व्यः इति जातम्. तस्य बहुवचने 'व्याः' हर विधि-हरय'. तव मोह भिन्दन्तु दुरितानि छिन्दन्तु. ये कर्तृबासे विचक्षणाः. (२४) अय पुरुषो रोष न करोति. परुषं कठोरं न वदति. शत्रून् हन्ति. नामेति प्रसिद्धम्. तथापि अस्य वीरस्य 'धी' भजित्वा मही रञ्जयति. (२५) यैरनिशं सुकृतं कृतं तेषामेव 'मनः' शरदिन्दुकुन्दधवल नगपतिनिलयं देवं [illegible] प्रसादयति.

## कर्मगुप्तम्

शीकरासारसंवाहिसरोजवनमारुतः । प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ २६ ॥ सुभग त्वाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः । शमयति कुर्वन्दिवसः पुण्यवतः कस्य रमणीयः ॥ २७ ॥ एहि हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् । सापि तद्वदनपङ्कजं पपौ भ्रात रुक्तमपि किं न बुध्यते ॥ २८ ॥

## करणगुप्तम्

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी । दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ २९ ॥ अहं महानसायात कल्पितो नरकस्तव । मया मांसादिकं भुक्तं भीमं जानीहि मा बक ॥ ३० ॥

## संप्रदानगुप्तम्

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी । ददाति भक्तिसंपन्ना पुत्रसौभाग्यकाम्यया ॥ ३१ ॥ प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः । स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ ३२ ॥

## अपादानगुप्तम्

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः । बिभेत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ३३ ॥ सरसीतोयमुद्धृत्य जनः कंदर्पकारकम् । पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ ३४ ॥

## संबन्धगुप्तम्

तूणेव मधुमासेऽस्मिन्सहकारद्रुमञ्जरी । इयमुन्निद्रपुष्कले भाति न्यस्तशिलीमुखा ॥ ३५ ॥ भानुर्वै जायते लक्ष्या सरस्वत्याथवा मता । अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ ३६ ॥ प्रासमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः । असती संनिहितेयं सहृतशीला सखी नियतम् ॥ ३७ ॥

## अधिकरणगुप्तम्

या कटाक्षच्छटापातैः पवित्रयति मानवम् । एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ ३८ ॥ विपद्यमानता सिद्धा सर्वस्यैव निरूप्मणः । यथात्र भस्म पश्यां च निर्वाणं हन्त्ययं जनः ॥ ३९ ॥

(२६) पान्थस्त्रीनिःश्वासैर्मांसलः पुष्ट इवेत्युत्प्रेक्षा. शीकरासारसंवाहिजवनः मारुतो वेगवान्वायुः 'स.' प्रक्षोभयति (२७) दिवस 'सु' सुख कुर्वन् अयति गच्छति. (२८) हे रमणि! पद्भि को पृथिव्यां दुर्बालक धूलिधूसरतनु दिगम्बरं पश्य. (२९) दुष्टं वाः जलं दुर्वं, तेन 'दुर्वारा' कलुषितजलेन (३०) महच्च तत् अनः शकटं च महानः तेन 'महानसा' महता शकटेन आयात. आगत. नरको मृदु' (३१) अम्भोरुहमये इत्यत्र 'अये' इः कामः तस्मै (३२) प्रशस्त्युक्तमार्गस्य इत्यत्र 'प्रशस्त्यै' कल्याणाय उक्तमार्गस्य. (३३) 'अलि' भ्रमरात (३४) 'सरसीत.' सरोवरात्, कं जलम्. (३५) उन्निद्रपुष्कले 'प.' इति भिन्ने पदे क्रियेते इः कामस्तस्य प'. (३६) भा कान्ति' 'नु' नरस्य. (३७) 'मासः' चन्द्रस्य. अहो मधु मद्य प्राप्तम् (३८) 'प' कृष्णे 'कान्ते' भर्तरि. (३९) विपद्यमानता इत्यत्र 'विपदि' वर्ते निर्गतः ऊष्मा द्रव्यरूपो यस्मात्तस्य निरूष्मणः अनागम आदरभाव', शान्तमूष्मरहितमित्यर्थः

## अक्षरच्युतकम्

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन्। विरस कुपरीवारो नदीन केन सेव्यते ॥७॥ सुशील स्वर्णगौराङ्ग पूर्णचन्द्रनिभानन । सुगत कस्य न प्रीतिं तनोति हृदि संस्थित ॥८॥

## स्थानच्युतकम्

तनोतु ते यस्य फणी गरुत्मान् पाणौ मुरारिर्दयिता च शय्या । नाभौ स्फुरन्भद्रमशुभ्रदेश पद्मा गतिश्चक्रमसौ विधाता ॥ ९ ॥ हर क्षयी तापकर सुदेश शान्तो हरिर्गोत्ररिपुर्विवस्वान् । चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य लक्ष्म्या वृत पातु विधिर्जगन्ति ॥ १० ॥

## व्यञ्जनच्युतकम्

भिक्षवो रुचिरा सर्वे रसा सर्वजनप्रिया । क्षमायामभिसपन्ना दृश्यन्ते मगधे परम् ॥११॥ सत्याशीलदयोपेतो दाता सुचिरमत्सर । जिन सर्वात्मना सेव्य पदमुच्चैरभीप्सता ॥१२॥

## च्युतदत्ताक्षरम्

सदागतिहयोच्छ्रायस्तमसो वश्यता गत । अस्तमेष्यति दीपोऽयं विधुरेक शिवे स्थित ॥ १३ ॥ पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा । तनोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ १४ ॥ कूजन्ति कोकिला साले यौवने फुल्लमम्बुजम् । किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥ १५ ॥

---

## अन्तरालापाः

कस्तूरी जायते कस्मात्को हन्ति करिणा कुलम् । किं कुर्यात्कातरो युद्धे मृगात्सिंह पलायनम् ॥ १ ॥ क खे चरति का रम्या का जप्या किं विभूषणम् । को वन्द्य कीदृशी लङ्का वीरमर्कटकम्पिता ॥ २ ॥ सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तम । विद्वद्भि का सदा वन्द्या अत्रैवोक्त न बुध्यते ॥ ३ ॥ युधिष्ठिर कस्य पुत्रो गङ्गा वहति कीदृशी । हसस्य शोभा का वास्ति धर्मस्य त्वरिता गति ॥ ४ ॥ भोजनान्ते च किं पेयं जयन्त कस्य वै सुत । कथ विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ ५ ॥ पृथ्वीसबोधनं कीदृक्कविना परिकीर्तितम् । केनेदं मोहितं विश्व प्राय केनाप्यते यश ॥ ६ ॥ क कुर्याद्भुवन सर्वं क सम्मूलयेद्द्रुमान् । किं प्रतीके भवेन्मुख्य क पटैनैति पुण्यताम् ॥ ७ ॥ भवत इवातिस्वच्छ कस्याभ्यन्तरमगाधमतिशिशिरम् । काव्यामृतरसमग्नस्त्वमिव सदा क कथय सरस ॥८॥ वीरे सरुषि रिपूणा नियतं का हृदयशायिनी भवति । नभसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ ९ ॥ भ्रमरहित कीदृक्षो भवतितरा विकसित पद्म । ज्यौतिषिक कीदृक्ष प्रायो भुवि पूज्यते लोकै ॥ १० ॥ प्रभव को गङ्गाया नगपतिरतिसुभगश्चन्द्रधर । के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थवतै ॥ ११ ॥ अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृश सदृश । नीलादिकोपलम्भ स्फुरति प्रत्यक्षत कस्य ॥ १२ ॥ गैरिकमन शिलादि प्रायेणोत्पद्यते कुतो नगत । य खलु न चलति पुरुष स्थानादुक्त स कीदृक्ष ॥ १३ ॥ कस्य मैत्री दुरधिगमः कमले क कथय विरचितावास । कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भग्ना ॥ १४ ॥ कं संजघान कृष्ण. का शीतलवाहिनी गङ्गा । के दारपोषणरता क बलवन्तं न बाधते शीतम् ॥१५॥ क कौ के क को कान् हसति

---

(७) एकस्मिन्नर्थे नदीना इन स्वामी 'नदीन' समुद्र द्वितीयेऽर्थे नदीन इत्यस्माद् नकार सस्वरो लुप्यते तदा 'दीन' इति तिष्ठति दीनशब्देन कृपणधनी पुमान् (८) एकस्मिन्नर्थे 'सुगतो' बुद्ध जिन द्वितीयेऽर्थे सुगत इत्यस्मात् गकार सस्वरो लुप्यते तदा 'सुत' इति स्यात् सुत पुत्र (९,१०) एषा श्लोकाना मध्ये अर्थयोजनिकाया कृताया सत्या योजनिका स्थानान्तरे धृताऽस्ति यो यस्य शब्दस्य अन्वयत्वेन लगति स शब्दस्तत्पार्श्वे धृतो नास्ति (११) एकस्मिन्नर्थे 'भिक्षव' श्वेताम्बरा द्वितीयेऽर्थे भिक्षव इति पदात् भकारलोप क्रियते तदा 'इक्षव' गुडवृक्षा (१२) एकस्मिन्नर्थे 'जिनो' वीतराग द्वितीयेऽर्थे जिन इत्यस्माज्जकारो लुप्यते तदा 'इन' इति स्थितम् इन स्वामी राजा वा (१३) एकस्मिन्नर्थे 'दीप' द्वितीयेऽर्थे दीप इत्यत्र पकारं लुप्त्वा तत्स्थाने नकारो दीयते तदा 'दीन' इति अथ दीनो विधुश्चन्द्र एक एव शिवे स्थित (१४) एकस्मिन्नर्थे 'कामिनी' स्त्री द्वितीयेऽर्थे 'यामिनी' रात्रि (१५) अत्र 'रसाले' इति वक्तव्ये 'साले' इति रच्युत 'वने' इत्यत्र 'यौवने' इति यौर्दत्त 'वदनेन' इत्यत्र 'मदनेन' इति मच्युतो वो दत्त

(१) कस्तूरी कस्माद् जायते? मृगात् करिणां कुल को हन्ति? सिंह कातरो युद्धे किं कुर्यात्? पलायनम्—इति योजना

(२) खे क चरति? वि पक्षी रम्या—रमा जप्या? मन्त्र विभूषणम् कटकम् वन्द्य—पिता लङ्का—वीरमर्कटैर्हनूमदादिभि कम्पिता नाभितैत्यर्थ (३) चरणाद्यन्ताक्षरयोर्मेलनेनोत्तरम् यथा सीता राम विद्या (४,५) चतुर्थपादस्थपदत्रयेण प्रश्नत्रयस्योत्तरम् (६) 'कविना' हे को हे पृथ्वि' इना कामेन कविना काव्यकर्त्रा (७८) 'सरस' तडागस्य रसेन शृङ्गारादिना सह वर्तमान (९) 'तारा' आरा चर्मप्रभेदिनी शत्रूणा मनसि दु खरूपा तारा नक्षत्रम् (१०) 'भ्रमरहित' भ्रमराणा भृङ्गाणा हितो हितकृत् भ्रमेण मिथ्यामत्या रहित शुद्धज्ञानवान् (११) 'प्रभव' उत्पत्तिस्थानम् महान्त ईश्वरा (१२) 'सदृश' समान इव दृश्यतेऽसौ तुल्य इत्यर्थ दृशा नेत्रेण सह वर्तमान सदृक् तस्य सनेत्रस्य मनुष्यस्य (१३) 'नगत' नगात्पर्वतात् न गत स न जगामेत्यर्थ (१४) 'कस्य' क जल तस्य 'क' ब्रह्मा 'कै' मस्तकै 'कुत' पृथ्व्या सकाशात् पृथ्व्याधिकारात्पतिता इत्यर्थ (१५) कृष्ण क संजघान? कमम् शीतलवाहिनी गङ्गा का? काशी दारपोषणरता के? केदारपोषणरता शीत बलवन्तं कं न बाधते? कम्बलवन्तम्—इति योजना

१ कतृकर्मक्रियापदाना स्थानान्तरे धृतत्वात् अन्वयो दुर्लभो यस्य वृत्तस्य तत् स्थानच्युतकम् २ 'स्फोटयित्वाक्षरं किंचित्पुनर यस्य दानन । यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥' इति

१ मरुदेशे

च हसतो हसन्ति हरिणाक्ष्या । अधर पल्लवमक्षी हसौ चन्द्रस्य कोरकान्दन्ता ॥ १६ ॥ का शमुकान्ता किमु कुन्दकान्त का तासुख किं कुरुते भुजग । क श्रीपति का विषमा समस्या गौरीमुखं चुम्बति वासुदेव ॥ १७ ॥ का लोकमाता किमु देहमुख्य रते किमार्तो कुरुते मनुष्य । को दैत्यहन्ता वद वै क्रमेण गौरीमुख चुम्बति वासुदेव ॥ १८ ॥ का शैलपुत्री किमु नेत्रगम्य शुक्रार्मक किं कुरुते फलानि । मोक्षस्य दाता स्मरणेन को वा गौरी मुखं चुम्बति वासुदेव ॥ १९ ॥ के भूषयन्ति स्तनमण्डलानि कीदृशुमा चन्द्रमस युत श्री । किमाह सीता दशकण्ठ नीता हारामहादेवरतातमात ॥ २० ॥ रणे वने किं समरस्य मार कृपेमय किं किमुशति भृङ्गा । स्थलाद्वयं विष्णुपद च केषा भागीरथीतीरसमाश्रितानाम् ॥ २१ ॥ व्रजन्ति पद्मानि कदा विकास प्रिया गते भर्तरि किं करोति । रात्रौ च नित्य विरहाकुला का सूर्योदये रोदिति चक्रवाकी ॥ २२ ॥ सतश्च लुब्धाश्च महर्षिसघा विप्रा कृपिम्या खलु माननीया । किं किं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं माधवदाययानम् ॥ २३ ॥ का पाण्डुपत्नी गृहभूषण किं को रामशत्रु किमगस्त्यजन्म । क सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णौ ॥ २४ ॥ करोति शोभामलके प्रिया को दृश्या न कान्ता विधिना च कोक्ता । अङ्के तु कस्मिन्दहन पुरारे सिन्दूरबिन्दुर्विधवाललाटे ॥ २५ ॥ किं भूषण सुन्दरसुन्दरीणा किं दूषण पान्थजनस्य नित्यम् । कस्मिन्विधात्रा लिखित जनाना सिन्दूरबिन्दुर्विधवाललाटे ॥ २६ ॥ कीदृक्षा गिरिशानुनये च धातुर्निष्ठा का विबुधजरातमलतृतीया । मध्यार्ग सति कथमात्मकोऽस्ति देश सोमान्य सकलकला जगातमाहा ॥ २७ ॥ विवाहे पुरश्रीजनैर्लिप्यते का न के मानमायान्ति गर्वोन्नता का । घने वारिधौ रामत कम्पते का हरिद्रा दरिद्रा सरिद्रावणश्री ॥ २८ ॥ कस्मिन्वसति वद मीनगणा विकल्प किं वारद वदति किं कुरुते विलम्बात् । विद्युल्लतावलयवान्परिकाङ्क्षनानामुद्धतको भवति क खलु वारिवाह ॥ २९ ॥ शब्द प्रभूतन इति प्रचुराभिधायी कीदृग्भवेद्वदत शब्दविदो विचिन्त्य । कीदृग्गृहस्थितिमते विहिताभियोग प्राय पुमान्भवति नास्तिकवर्गमध्य ॥ ३० ॥ क प्रार्थ्यते मदनविह्वलया युवत्या भाति क्व पुण्ड्रकतुतिः कथ वताशु । स्नानादरो भवति केन च रत्यतेऽत्र वाद्यास्ति किं फलमुदाहर नालिकेरम् ॥ ३१ ॥ क वसति लघु जन्तु किं निदान हि वान्तेर्ज्वटिनि नद पशु क लम्बकण्ठं वदति । प्रसभसमयदुष्ट वेत्ति या कामिनीना तिलतुषपुटकोणे मक्षिकोऽप्र प्रसूता ॥ ३२ ॥ को निर्दय त्रिपुररिपुणा कथ कर्णस्य हृता नया कृल विरन्धति क क पश्चीरतश्च । क सन्नद्धो भवति समरे भूपग किं कुचाना किं दु सङ्ग्रामनति महता मानपूजापहार ॥ ३३ ॥ क कान्तारमगात्पितुर्वचनत सङ्क्षिप्य कण्ठस्थलीं कामी किं कुरुते च गृध्रहठतस्छिन्न प्ररूढ च किम् । का रघु कुलकालपाकिमनस्चन्द्रातप द्वेष्टि को रामश्चुम्बति रावणस्य वदन सीतावियोगातुर ॥ ३४ ॥ कीदृक्ष्यचमतर्ग कममितपादेन नन्दालय शब्द कुत हि जायते युवतय कस्मिन्सति व्याकुला । विक्रेतु दधि गोकुलात्प्रचलिता कृष्णेन मार्गे धृता गोपी काचन त किमाह करुण दानी अनोखे मये ॥ ३५ ॥ किं कुर्वन्त्युषसि द्विजा प्रतिदिन के माननीया प्रभो का वा साहसिकी निशासु सतत धी कीदृशी वतत । कुत्र स्मे मधु नाळिकेरजफले के सन्ति पाथाम सध्यावन्दनमाचरन्ति विबुधा नारीसमागन्तर्जै ॥ ३६ ॥ लङ्काभूपनिशाचरो रघुपतिं युद्धे कथ दृष्टवान् दीन पाति पितेव य पशुपति कन्तस वाह प्रिय । केना पूर्वफल नरै सुकृतिभि कस्मिन्स्थले भुज्यते जाग्र ये भुवि तान्यशास्ति कतमो हेपानिहृत्रोत्तरम् ॥ ३७ ॥

(१६) हरिणाक्ष्या क क हसति ? अधर पल्लवम् कौ कौ हसत ? अक्षी हसौ वे कान् हसति ? दन्ता- कुन्दस्य कोरकान् (१७,१८,१९) गौरी मुखम् चुम्बति वासुदेव गौरीमुख चुम्बति वासुदेव- भुजगो नार (२०) हारा महादेवरता वनात रात्रि हा राम हा देवर, हा तात, हा मात (२१) मा कान्ति गी वाणी रथी योद्धा इति अनावृष्टयादि भृङ्गा रस वमन्ति वाञ्छन्ति आश्रितानाम् भागीरथीतीरसमाश्रितानाम् (२२) सर्वोदये रोदिति चक्रवाकी २३ मानम् धनम् वनम् दानम् धनम् यानम् माधवदाययान माधवे वैशाखे दाय ऊष्मा तस्मिन् यान गमन नेच्छन्ति (२४, २५, २६) चतुर्थपादस्यपदै प्रश्नस्योत्तरम् (२७) सोमा शिर लक्ष्मी (२८) चतुर्थपादस्यचतुर्भि पदै क्रमेण चत्वारि उत्तराणि

(२९) 'वारिवाह- वारि जले वा विकल्पार्थे अह दिनम् वारिवाहो मेघ- ३० नास्ति कवर्गमध्य न विद्यते कवर्ग गकारो मध्ये यस्य स प्रभूतशब्द प्रभूत प्रचुरवाची नास्तिकाना ऋपुनर्जैन वादिना वर्गे समूहस्तस्य मध्येऽन्तवर्ती (३१) 'नालिकेरम्' ना पुरुष अलिके भाले अर चञ्चलम् पुन प्रविलोनम् रक कुदे कलिना अमरेण वाद्योऽसि यस्य एवविध नालिकेरम् (३२) चतुर्थपादस्य चतुष्टयेन प्रश्नचतुष्टयस्योत्तरम् (३३) मार मदन- नर पूर- वार पर- हार मानपूजापहार मानपूजयोरपहारो नाश- (३४) चतुर्थपादस्थपदैरनुक्रमेण उत्तराणि (३५) दानी दाननशीलेति जन कथ्यन् गे अनोखे मये सति दानी अनोखे मये यावनीभाषया प्रत्युत्तरम् (३६) चतुर्थपादस्थपदैरनुक्रमेणोत्तराणि (३७) लङ्का-कान्त दीन-नदी केन भुजन-नारे स्वर्गे ज रा-रामी

कुत्रोदेत्युदयाचलस्य तरणी रम्या यति कस्य खे वान्त्या भान्ति च किं करोति गणको यष्टिं विधृत्यैति क । कस्मि ज्ञाम्रति जन्तवो न च कदा सूते च का क प्रिय शृङ्गाग्रे तुर गस्य भाति गणयत्यन्धोऽह्नि वन्ध्यासुत ॥ ३८ ॥ अन्यस्त्रीस्पृ हयालवो जगति के पद्मामगम्या च वा को धातुर्दर्शने सम स्तमनुजै का प्रार्थ्यतेऽहर्निशम् । दृष्ट्वैका यवनेश्वरो निजपुरे पद्मानना कामिनीं मित्रं प्राह किमादरेण सहसा यागनदी दशमा ॥ ३९ ॥ कस्मिञ्शेते मुरारि क न खलु वसते र्वायसी को निषेध क्षीणा रागस्तु कस्मिन्क नु खलु सितिमौ शौरिसबोधनं किम् । सबुद्धि का हिमांशोर्विधिहरवयसा चापि सबुद्धय वा ब्रूते लुब्ध कथं या पुरुषुलहननं केन तत्केशवेन ॥ ४० ॥ गच्छन्ति कांजिवहौ हुतनिजतनव का भिनत्ति स्वकूल किं स्याद्योऽयं विकल्पे कैकचनिमनखै किं नृसिंहेन भिन्नम् । कीदृग्दित्या प्रसूति विमनल्शमन वा नृपै पालनीया को वन्द्य क प्रमार्ष्टि त्रिभुवनकलुष स्वर्धुनी वारिपूर ॥ ४१ ॥ पुस सबोधन किं विदधति करिणा के रैचोऽमर्द्विपकिं का शून्या ते रिपूणा नरवरनरक कोऽय धीद्रोर्चक किम् । के वा वर्षासु न स्युर्विसमिव हरिणा किं नखामैर्विभिन्न को वा मार्गे विसर्पन्विघटयति तरून्नर्मदा वारिपूर ॥ ४२ ॥ किं तृष्णाकारि कीदृग्रथचरणमहो रौति क काध्विकाम्वि कोऽपस्मारी भुजगे किमु कलिशमन त्वार्य सबोधन किम् । का सुन्दर्यामपीन्दु कथमचलभृत का च सबुद्धिरमेर्बीजं किं कांवनीजारमणमतिहरा हेमसारङ्गलीला ॥ ४३ ॥ ताराविष्णूरणाविद्धखगहृदयरमास्कन्दसबुद्धय क्क क्क स्याद्धातुत्रय स्तुविकरणपठित कुत्र तत्रावमोध । चत्वार स्तद्धिता स्यु क नु खलु विगतैकैकवर्णस्वरूपा किं सूत्रं पाणिनीयं विकसति न सहस्रोक्तिभिर्भास्वरेऽपि ॥ ४४ ॥

(३८) चतुर्थपादस्यपदैरनुक्रमेणोत्तराणि (३९) यारा आरा नदी दश मा लक्ष्मी यारानदीद शमा हे मित्र, पनादृशी दीपकलिका मया कदापि न दृष्टा इत्यर्थक यावनीभाषया उत्तरम् (४०) के उदके शवे शेते न नवे शवे धवाविशेषे केशव इ अ ईश वे न केशवेन (४१) स्व स्वर्गे धुनी नदी वा रिपूर रिपोर्हिरण्यवरिपोरुर स्थलम् स्वधुनी स्व स्वर्गे धूनयति कम्पयतीति तादृशी वारि उद कम् पू पुरी अ विष्णु स्वधुनीवारिपूर (४२) न मदा वारि पू नगरी अ विष्णु नर्म क्रीडानर्म दावा दावानला रिपुर हिरण्यकशिपोरुर स्थलम् नर्मदावारिपूर (४३) हेम सार अराभि सहितम् गली प्रशस्तकण्ठ इला पृथ्वी लाली लालावान् गर विषम् साम सान्त्वम् हे हेला लीला मली मलवान् कलङ्कीति यावत् साग अगैर्वृक्षै सहित रम् हेमसारङ्गलीला हेम्न सुवर्णस्य सारङ्गो मृग तस्य लीला

(४४) हे भ हे अ अवे भा वे भाव इ भावे भा दीप्तौ वा गतिगन्धनयो इण् गतौ भावे भवस्यापत्य भावि अवस्यावि इत्य वि अस्य इ० सख रथ अश्व स्वा वैषामुक्तय लोकय ताभि सह 'भास्वरे' इत्यस्मिन्पदे 'भावे' इत्युत्तर स्फुरति 'भास्वरे' इत्यत्र सकार अकाररेफौ विना 'भावे' इति पाणिनिसूत्र सुद्भवतीत्यर्थ

१ कस्मिन्प्रदेशे २ सूर्य ३ श्वेतवत्त्वम् ४ सयामार्गौ ५ लक्षणि नेदेहा ६ करपत्रमद्दृशनखै ॥ शोभा ८ रमणीयम् ९ भवति १० अवनिना सीता तद्रमणो राम

---

## बहिरालापाः

पूजाया किं पद प्रोक्तमस्तनं को विभर्त्युर । क आशु घतया स्यात प्रलम्बासुरविद्विष ॥ १ ॥ को दुरालस मोहाय का प्रिया मुरविद्विष । पद प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥ २ ॥ पक्षिश्रेष्ठसखीबभ्रूसुरा वाच्या कथ वद । ज्येष्ठे मासि गता शोष कीदृश्योऽम्बुजाशु मुत्र ॥ ३ ॥ विश्वंभराप्रलम्बघ्नश्रीहिमांशुपरयुगा । कथ वाच्या भवन्त्येता दिनान्ते विकसन्ति का ॥ ४ ॥ आन न्दयति कोऽत्यर्थं सज्जनानेय भूतले । प्रबोधयति पद्मानि तमासि च निहन्ति क ॥ ५ ॥ अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये । प्रियस्य कीदृशी कान्ता तनोति सुर तोत्सवम् ॥ ६ ॥ कीदृक्किं स्यान्न मत्स्याना हितं स्वेच्छा विहारिणाम् । गुणै परेषामत्यर्थं मोदते कीदृश पुमान् ॥ ७ ॥ अगस्त्येन पयोराशे कियत्किं पीतमुज्झितम् । त्वया वैरिकुल वीर समरे कीदृशं कृतम् ॥ ८ ॥ के स्थिरा के प्रिया क्षीणा कोऽप्रियो नक्तमाह्वय । नृत्यम् कीदृशी रम्या नदी कीदृग्घनागमे ॥ ९ ॥ का कृता विष्णुना कीदृग्योपिता क प्रशस्यते । असेव्य कीदृश

(१) 'सुनासीर' ॥ पूजायाम् ना पुरुष सीरो हलम् (२) रामानुराग ' रा धनम् मा लक्ष्मी नु इति वितर्के राग आरक्तत्वम् (३) 'विवरालीनकुलीरा ' वि पक्षी वर श्रेष्ठम् आली सखी नकुली नकुलस्त्री इरा मदिरा विवरेषु छिद्रेषु आलीना प्रविष्टा कुलीरा जलचरजीवविशेषा यासु ता (४) 'कुवलयवनराजय ' कु पृथ्वी (बवयोरैक्यात्) बलो बलभद्र यवो धान्यभेद नरो मनुष्य राजि समूह कुवलयाना कमलाना वनानां राजय पङ्क्तय (५) 'मित्रोदय ' मित्राणा सखीनामुदयो वृद्धि मित्रस्य सूर्यस्य उदय उद्गमनम् (६) 'मदनवती ' मदना मदनवृक्षा विद्यन्ते यस्या सा अतिगहनत्वाद्दुर्गमा मदन कामो विद्यते यस्या सा सर्वा वना इत्यर्थ (७) 'विमत्सर ' वय पक्षिणो विद्यन्ते यस्मिस्तत् विमत् ईदृश सरस्तडागम् विगतो मत्सरोऽहकारो यस्य स (८) 'सकल कम्' सकल समस्त क पानीय मूत्र च कलङ्केन लाञ्छनेन सह वर्त मान कुलम् (९) 'अगाधवारिपूरजनिततरङ्गा' अगा पर्वता धवा भर्तार रिपु शत्रु हे रजनि! ततरङ्गा ततो विस्तीर्णो रङ्गो नर्तन मण्डपो यस्या सा अगाधेन अतलस्पर्शेन वारिपूरेण जलसमूहेन जनिता उत्पादितास्तरङ्गा ऊर्म्यो यस्या सा

जने। शमोरावरणं किं कं भजन्ते व्याधयो जनम् ॥ ३३ ॥ कस्मिन्स्वपिति कंसारिः का वृत्तिरधमा नृणाम्। किं ब्रूते पितर बाल किं दृष्ट्वा रमते मन ॥३४॥ किमिच्छति नर काश्या भूपाना को रणे हित । को वन्द्य सर्वदेवानां दीयतामेकमुत्तरम् ॥ ३५ ॥ भागीरथी कथंभूता कामिनी प्राह किं प्रियम्। एकमेवोत्तर देहि शास्त्रलौकिकभाषया ॥३६॥ बुध कीदृग्वचो ब्रूते को रोगी कश्च नास्तिक । कीदृक्चन्द्रं नम स्यन्ति किं सूत्र पाणिनेर्वद ॥३७॥ राज्ञ सबोधनं किं स्यात्सु श्रीवस्य तु का प्रिया। अधनास्तु किमिच्छन्ति आर्तें किं क्रियते वद ॥ ३८ ॥ किमस्ति यमुनानद्या जाराक्किं वक्ति जारिणी। ओंभ्रगीर्वाणभाषाभ्यामेकमेवोत्तर वद ॥ ३९ ॥ का कान्ता कालियाराते पुनरर्थे किमव्ययम्। किं वन्द्यं सर्वदेवाना फलेषु किंनु सुन्दरम् ॥ ४० ॥ केदारे कीदृशो मार्ग कुत्र शेते जनार्दन । स्त्रीचित्त कुत्र रमते स्वामी किं वक्ति चेटिकाम् ॥ ४१ ॥ घनसमये शिखिषु स्यात्कृत्यं कीदृक्षु किं घनात्पतति। प्रावृषि कस्य न गमन मानसगमनाय कीदृशा हसा ॥ ४२ ॥ चादय इति यत्र स्यादुत्तरमथ तत्र कीदृश प्रश्न । कथय त्वरित के स्युर्नौकाया वाहनोपाया ॥ ४३ ॥ वदतानुत्तमवचन ध्वनिरुच्चैरुच्यते स कीदृक्ष । तव सुहृदो गुणनिवहे रिपुनिवह किं नु कर्तार ॥ ४४ ॥ को मायति मकरन्दैस्तनय कमसूत जनकराजसुता। कथय कृषीवल सस्यं पक्कं किमचीकरस्त्वमपि ॥४५॥ पृच्छति पुरुष केऽस्या समभूवन्वज्रकृत्तपक्षतय । बहुभय देशं जिगमिषुरेकाकी वार्यते स कथम् ॥ ४६ ॥ को नयति जगदशेषं क्षयमथ विभराबभूव क विष्णु । नीच कुत्र सगर्व पाणिनिसूत्र च कीदृक्षम् ॥ ४७ ॥ किं स्याद्विशेष्यनिष्ठ का सख्या वदत पूरणी भवति । नीच केन सगर्व सूत्रं चन्द्रस्य कीदृक्षम् ॥ ४८ ॥ सुकपरिविन्दशब्द सुब्रह्मण्यस्य वाचक केन। स्तनभरनमिता नारी केनोपायेन रञ्जयेत्कान्तम् ॥ ४९ ॥ कीदृग्गृह याम्यगृहगतस्य काल्याणमम्भस्तरणे जनानाम्। भूषा कथ कण्ठ न ते [illegible] पृष्टे मुक्ताकलापैरिति चोत्तर किम् ॥ ५० ॥ कीदृग्वन स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य। वाच्यं भवेदीक्षणजातमम्बु क चाधिशेते गवि कोऽर्चनीय ॥ ५१ ॥ दधौ हरि कं शुचि कीदृगभ्रं पृच्छत्यक किं कुरुते सशोक । श्लोक विधायापि किमिच्छुदार कविर्न तोष समुपैति भूय ॥ ५२ ॥ लक्ष्मीधर पृच्छति कीदृश स्यान्नृप सपत्नैरपि दुर्निवार । अकारि किं ब्रूहि नरेण सम्यक्पितृत्वमारोपयितुं स्वकीयम् ॥ ५३ ॥ कीदृश वद भव स्थल मत द्वारि कुत्र सति भूषण भवेत्। ब्रूहि कान्त सुभट सकार्मुक कीदृशो भवति कुत्र विद्विषाम् ॥ ५४ ॥ का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता। कीदृशेन पुरुषेण पक्षिणा बन्धन समभिलष्यते सदा ॥५५॥

(३३) 'अवेलाभोजिनम्' अवे लाभ अजिनम् ओवेलाभोजिनम् (३४) 'शेषेसेवाबाधपररूपम्' शेषे सेवा वा पररूपम् (३५) 'मृत्युजय' मृत्युम् जय मृत्युजय (३६) 'मलापहा' मलापहा मला पहा (३७) 'अर्थवद्धातुरप्रत्यय प्रातिपदिकम्' अर्थवत् अधातु अप्रत्यय प्रातिपदिकम् अर्थवदधातुरप्रत्यय प्रातिपदिकम् (३८) 'देवताराधनम्' देव तारा धनम् देवताराधनम् (३९) कालिय कालि य (४०) 'मातुलिङ्गम्' मा तु लिङ्गम् मातुलिङ्गम् (४१, ४२) 'समुत्सुकमनस' समु सु मुदा हर्षेण सह वर्तमाना समुद्रेषु क पानीयम् अनस शकटस्य रासुन्सुक उत्कण्ठायुक्त मनो येषां ते समुत्सुकमनस (४३) केनिपाता ' अत्र, के निपाता इति प्रश्न प्रथमवारमेव द्वितीयवार तूत्तरम् निपाता के भवन्तीति प्रश्न चादयो निपातसञ्ज्ञा के पानीये निपतन्ति ते केनिपाता अरित्राणि (४४) 'अवमतार ' अवम नीचार्थवाचकम् तार अ उच्चैर्ध्वनि अवमन्तार अरिमित्राणि रिपूणामपमान करिष्यन्ति इत्यर्थ (४५) 'अलीलवम्' अली भ्रमर, लव लवनामान पुत्रम्, अह अली लव छेदनमकरवम् (४६) 'मानवनगा ' हे मानव! नगा पर्वता इन्द्रेण हि पर्वताना पक्षच्छेद कृत इति पौराणिकी कथा, मानवनगा हे अनवन! न विद्यते अवन रक्षण यस्य स अनवन तत्संबोधन हे अरक्षिन! त्व मा गा गमन मा कुर्या

(४ ) 'यमो गन्धने' यम कृतान्त अग गोवर्धनम् धने वनो गन्धने पाणिनीयव्याकरणमध्ये इद सूत्रमस्ति (४८) 'विशेषणमेकार्थेन' विशेषणम् एकादीनाना सख्यापूरक एकमेव भवति एकादी अङ्के लिख्यते तदा बिन्दूना साफल्य स्यादन्यथा शून्यमेव अर्थेन द्रव्येण विशेषणमेकार्थेन इद चन्द्रव्याकरणसूत्रमस्ति (४९) 'उपरिविहरणेन' आद्ये सुकपरिविन्दशब्दे उ प रि वि इत्येतेषा वर्णाना हरणेन निष्कासनेन स्कन्द इति शब्द सुब्रह्मण्यस्य षडाननस्य वाचको भवति द्वितीये उपरि विहरणेन इत्यस्य विपरीतरतेनेत्यर्थ (५०) 'हारावि नाव' हारानि हा इति खेदे हा इति राव शब्दो विद्यते यस्मिंस्तत् नाव नौका हे हारा, वो युष्मान्विना (५१) 'अहिंस्रमहिम' अहिंस्रम् न सन्ति हिंस्रा घातुका जीवविशेषा यस्मिंस्तत् अहिम न विद्यते हिमम् अहिम् तस्य अहिम सत कोऽर्थ यदा अहिमशब्दात् हिम् दूरीक्रियते तदा अम्भ इति तिष्ठेत् अम्भ नेत्रजल अश्रुपात अहिं शेषनागम् अ कृष्ण पूज्य सन् अधिशेते (५२) 'अगमकमकरोदिति' अग गोवर्धनम् अक न विद्यते क जल यत्र तत् हे अक न विद्यते क सुख यस्य स हे दु खिन्! रोदिति रोदन करोति अगमकमकरोदिति एव श्लोक अगम्य अकरोत् इति विचारयन् तुष्टो न भवति (५३) 'समजनितनय' हे सम मा लक्ष्मीस्तया सह वर्तमान हे लक्ष्मीधर! जनितनय कृतो नयो न्यायो येन स समजनि तनय तनय पुत्र समजनि उत्पादित (५४) 'अवारितोरणे'-अवारि न विद्यते वारि जल यस्मिंस्तत् तोरणे बहिर्द्वारे सति अवारितो रणे संग्रामे अवारित न वारयितु शक्यते स (५५) 'शकुन्तलाभरतेन' शकुन्तलानाम्नी रूपे पुत्री भरतनाम्ना पुत्रेण, नन्दिता इत्यर्थ शकुन्ताना पक्षिणा लाभोऽर्जन तत्र रत आसक्तस्तेन, व्याधेनेत्यर्थ

१ संस्कृतभाषा महाराष्ट्रभाषया चेत्यर्थ २ तैलङ्गभाषया संस्कृतया च

कीदृग हृदयहारि कूनित क सखा यशसि मूर्तमेत । कस्वान्नि विपिने मयाकुल कीदृशश्च न मवेन्निशाकर ॥ ५६ ॥ कीदृशीं निरयमूरनेकधा सेव्यते परमपापकर्मभि । प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥ ५७ ॥ केऽत्र द्रुमतलेषु संस्थित कीदृशो भवति मत्तकुञ्जर । तत्त्वत शिरमपेक्ष्य लक्षणैरर्जुन समिति कीदृशो मवेत् ॥ ५८ ॥ निर्खिल सकलपति पृच्छति को नैको मृत्योर्भयमृच्छति । मेना त्ययकृतरुचिराशाया किं तिमिरक्षयकारि निशाया ॥ ५९ ॥ विहगपति कं हृतवानहित कीदृग्भवति पुर जनमहितम् । किं कठिनं विदित वद धिमन्याद्पतिरपि कीदृग्भयकृत् ॥ ६० ॥ अनुकूलविधायिदैवतो विजयी स्यान्ननु कीदृशो नृप । विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुत ॥ ६१ ॥ कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति मोगिन । अधिगम्य रतं वराङ्गना क यत्र कुरुते सुगिक्षिता ॥ ६२ ॥ कयो वद कुन कीदृशा कठिणं किं विदित समन्तत । अधुना तन वरियोषिता हृदि ताप मनलो विहाय का ॥ ६३ ॥ वसति कुन सरोरुहसततिर्दिनकृतो ननु के तिमिरच्छिद । पननमक्षसपक्षरणोत्सुक पुरुषमाह्वय को जगति प्रिय ॥ ६४ ॥ न भवति मत्स्यस्य कीदृशी भू क इह कुच न विमर्ति क गता श्री । मनदरिनिवहेषु कास्ति नित्यं बलमथनेन विपद्यघायि केषाम् ॥ ६५ ॥ समयमिह वदन्ति क निशीथ शमयति कान्वद वारिवाहवृन्दम् । वितरति जगता मनःसु कीदृङ्मुदमनिमानमय महातडाग ॥ ६६ ॥ किमकरवमहं हरिर्महीध्रं समुन्नन्लेन गता हितं विधित्सु । प्रियतमवदनेन पीयते क परिणतबिम्बफलोपम प्रियाया ॥ ६७ ॥ परिहरति भयाच्चगाहित किं कमथ कदापि न विन्दतीह भीत । कथय किमकरोरिमा धरित्रीं नृपतिगुणैर्नृपते स्वय त्वमेक ॥ ६८ ॥ पृच्छति शिरसिरुहो मधुमथनं मधुनथनस्तं शिरसिरुह च । क खलु चलतया भुवि विदित का ननु यानतया गवि गदिता ॥६९॥ कीदृक्तोय दुस्तर स्यात्तितीर्षो का पूर्त्यासिन्धवङ्गमामध्रयम्य । दृष्ट्वा धूम दूरतो मानविज्ञा किं कर्मासि भ्रातरमाश्रयाशम् ॥ ७० ॥ कीदृक्प्रातर्दीपनर्ते शिखा स्याद्दुष्ट पृच्छन्त्यामनन्ते मृगा किम् । देवामाले किं गते प्रायशोऽस्मिँल्लोके कुर्यान्नो विवाह विविक्त ॥ ७१ ॥ कीदृक्सेना मवति रणे दुर्वार वीर कस्मै स्पृहयति लक्ष्मीमिच्छन् । का सद्बुद्धिर्भवति भुव सग्रामे किं कुर्वीध्व सुमटजना भ्रातृव्यान् ॥ ७२ ॥ कस्यारातेर्वद गमन केन स्यात्कस्मिन्दृष्टे सलमते सत्पेच्छु । क सर्वेषा शुभकरमूर्चुर्धीरा किं कुर्यास्त्वं सुजन सशोक लोकम् ॥ ७३ ॥ कीदृक्ष सकलजनो भवे स्तुगान क कालो विदिन इहान्धकारहेतु । क प्रेयान्कुमुदवनस्य को निहन्ति भ्रातृव्यं वद शिरसा जितस्त्वया क ॥ ७४ ॥ सग्रामे स्फुरदसिना हतास्त्वया के दु खं के बत निरये नरस्य कुर्यु । कस्मिन्नुद्भवति कदापि नैव लोम ज्ञाता के जगति महालघुत्वमाज ॥ ७५ ॥ कीदृक्षं

(५६) 'कल्कनिरहित ' कल मधुर शब्द कवि काव्यादिकर्तृ अहित शत्रु कलङ्केन मृगरूपाभिज्ञानेन निरहित न स्यात् इति भावार्थ (५७) 'नरकपालरचिता' नरकाणा पाला नारकजीवरक्षका यमभटास्तै रचिता' अपरञ्च नराणा कपालानि कर्पराणि तै कृत्वा रचिता स्मशानभूमिस्तु मनुष्याणा मुण्डै सहिता भवति (५८) 'दानवकुलभ्रमरहित ' दानेन मदेन बहुदाना वृक्षाणा भ्रमरैभ्य सकाशात् हित हितकृदित्यर्थ- दानवाना दैत्यानां कुले यो भ्रमो दानवा अमी युध्यन्तीति मिथ्याज्ञान तेन रहित (५९) 'विधुताराते' हे विधुताराते' विधुता कम्पिता अरातय शत्रवो येन स तत्संबोधनम् अन भक्षा विधुश्चन्द्र तारा नक्षत्राणि तासा तेन प्रकाश (६०) 'अहिमकरमय' अहिं सर्पम् अकर नास्ति करो राजदण्डो यस्मिस्तत् अय लोहम् महय सर्पां मकरा मत्स्यविशेषा स्तन्मय (६१) 'कुशलवधिव ' कुशले शुभसूचकशकुनैर्धिनो वर्धापिन कुशश्च लवश्च कुशलवौ एतन्नामानौ पुत्रौ तयोऋद्धि सपत्तस्याव (६२) 'सुरतरवे ' सुरतरव कल्पवृक्षाय वाञ्छन्ति सुरतस्य संभोगस्य रव शब्दस्तस्मिन् (६३) 'गिरिसारमुखा ' गिरि वाण्या सार प्रधान स्फुटोच्चारणवन्मुख वदन येषा ते गिरिसार लोहम् उक्ता स्तस्य (६४) 'केकिरणोत्कर ' के पानीये किरणाना उत्करा समूहा हे केकिरणोत्क, केका विद्यते येषां ते केकिन तेषा मयूराणा रणे शब्दे उत्क उत्सुक तत्संबोधनम् रा द्रव्यम् (६५) 'विपन्नगानाम्' विगता पन्नगा सर्पा यस्या सा विपन्नगा न किंतु पन्नगस्थितैव ना पुमान् अ कृष्णन् विपत्सेपत्स्यभाव दरिद्रता नगानां पर्वतानाम्

(६६) 'अरविंदवान्' अरवि नास्ति रवि सूर्यो यस्मिन्स अरविस्तम् दवान्दावानलान् अरविन्दवान् अरविन्दानि कमलानि विद्यन्ते यस्मिन्स (६७) 'अधर ' हे कृष्ण ! त्व गोवर्धनपर्वत अधर हस्ते धृतवान् अधर ओष्ठ (६८) 'समरनयत्' समर संग्रामम् जय जयवादम् अह समरव्यय रागिणीं पृथ्वीमकरवम् (६९) 'केशवनौका' हे केशवनौका वने ओको गृह यस्यासौ वानर हे केशव ! नौका नाव- (७०) 'अनुमानासे' अनु न विद्यते नौ यत्र तत् नौकारहितमित्यर्थ माना जनित्री हे अम्बे त्वत्र! अनुमानासे त्व अनुमान करिष्यसि (७१) 'विभाकरभवनम्' विभा विगता भा कान्तिर्यस्या सा हे करभ उष्ट्र! वनम् विभाकरभवन विभाकरस्य सूर्यस्य भवन गृह तत् सिंहराशि गते जीवे लोका विवाहादिशुभकार्याणि न कुर्वन्ति सिंहस्याधिपति सूर्य (७२) 'परानयेमहि' परा उत्कृष्टा उत्कृष्ट एव सेना जय प्राप्नुयादित्यर्थ आनये सग्रामाय हे महि ह पृथ्वि! वय पराजयेमहि जयेम (७३) 'विनोदयेयम्' विना गरुडेन उदये सति परस्योन्नती सत्याम् अय भाग्यम् अह त विनोदयेय विनोदेन युक्त कुर्यामित्यर्थ (७४) 'विधुरविरहित' विधुरेण कष्टेन विरहित सुखीत्यर्थ विधुश्च रविश्च विधुरवी चन्द्रादित्यौ ताभ्या रहित, विधुश्चन्द्र अवि कर्णांशु अहित शत्रु (७५) 'नरकरेणव' नराश्च करेणवश्च मनुष्यहस्तिन- नरकस्य रेणवो धूल्य अत्रिल्वा बालुका इत्यर्थ नरकरे पुरुषाणां हस्ततले भ्रान्त परन्तु

समिति बलं निहन्ति शत्रु विष्णो का मनसि मुदं सदा तनोति । तुच्छ सच्छरधिमुख निगद्यते किं पश्चलं समम पमान एव केषु ॥ ७६ ॥ काममरिरहितामिच्छति भूप कामुद्धरयति शूकररूप । केनाकारि हि मन्मथजननं केन विभाति च तरुणीवदनम् ॥ ७७ ॥ हिमांशुखण्डं कुटिलोज्ज्वलप्रभं भवेद्वराहप्रवरस्य कीदृशम् । विहाय वर्णं पदमध्यसस्थितं न किं करोत्येव जिन करोति किम् ॥ ७८ ॥ वसन्तमासाद्य वनेषु कीदृशा पिकेन राजन्ति रसालभूरुहा । निरस्य वर्णद्वयमत्र मध्यम तव द्विपा कान्ततमा तिथिश्च का ॥ ७९ ॥ उरःस्थल कोऽत्र विना पयोधर बिभर्ति सबोधय मारुताशनम् । वदन्ति क पत्तनसभव जना फल च किं गोपवधूकुचोपमम् ॥ ८० ॥ वसन्तमासाद्य वनेषु राजते विकासि किं वल्लभ पुष्पमुच्यताम् । विहंगम क च परिस्फुटाक्षरं वदन्ति किं पङ्कजसभवं विदु ॥ ८१ ॥ समुद्यते कुत्र न याति पांसुला समुद्यते कुत्र भयं भवेज्जलात् । समुद्यते कुत्र तथापयात्यरिः प्रहीणसबोधनवाचि किं पदम् ॥ ८२ ॥ तपस्विनोऽत्यन्तमहासुखाशया वनेषु कस्मै स्पृहयन्ति सत्तमा । इहापि वर्णद्वितय निरस्य भो सदा स्थितं कुत्र च सत्त्वमुच्यताम् ॥ ८३ ॥ पदमनन्तरवाचि किमिष्यते कपिपतिर्विजयी ननु कीदृश । परगुण गदितुं गतमत्सरा कुरुत किं सतत भुवि सज्जना ॥ ८४ ॥ वदति राममनुष्य जघन्यजो वसति कुत्र सदालसमानस । अपि च शक्रसुतेन तिरस्कृतो रविसुत किमसौ विदधे त्वया ॥ ८५ ॥ मेघात्यये भवति क समद सुभगं च किं कमधरन्मुरजित् । कुद्रुतैलमिश्रितगुडो नियतं विनिहन्ति क निगुणसप्तदिनैः ॥ ८६ ॥ वर्षासु का भवति निर्मधु कीदृगब्ज शेषं बिभर्ति वसुधासहित क एक । आमन्त्रयस्व धरणीधरराजपुत्रीं को भूतिमक्षनिचिताङ्गजनाश्रय स्यात् ॥ ८७ ॥ कौ शकरस्य वलयावपयोधर क कीदृक्परस्य नियत वशमेति भूप । सबोधयोरगपतिं विजयी च कीदृग्दुर्योधनो नहि भवेद्वद कीदृशश्च ॥ ८८ ॥ कामुज्जहार हरिरम्बुधिमध्यमग्ना कीदृक्श्रुत भवति निर्मलमानसानाम् । आमन्त्रयस्व वनमग्निशिखावलीढं तत्रापि को दहति के मदयन्ति भृङ्गान् ॥ ८९ ॥ मेघात्यये भवति किं सुभगावगाह का वा विडम्बयति वारणमल्लवेश्या. । दुर्वारवीर्यविभवस्य भवेद्रणे क का सरवक्रसुभगास्तरणिप्रभाभि ॥ ९० ॥ कल्याण वाक्त्वमिव किं पदमत्र कान्तं सद्भूपतेस्त्वमिव क परितोषकारी । क सर्वदा नृपगतिस्त्वमिवातिमात्रं भूत्याश्रित कथय पालितसर्वभूत ॥ ९१ ॥ सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही सत्यस्य का सुकृतवारिधिचन्द्रलेखा । पार्थश्च कीदृगरिदावहुताशनोऽभूत्का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ९२ ॥ मेघात्यये भवति का सुभगावगाह्या वृत्त वसन्ततिलक कियदक्षराणाम् । भो भो कदर्यपुरुषा विषुवद्दिने च वित्तं च य सुबहु तत्क्रियता किमेतत् ॥ ९३ ॥ प्राहे वसन्तसमये वद किं तरूणां किं क्षीयते विरहिणामुरसा किमेति । किं कुर्वते मधुलिहो मधुपानमत्ता कीदृग्वनं मृगगणास्त्वरित त्यजन्ति ॥ ९४ ॥ दुर्वारवीर्य सरसि त्वयि का प्रसुप्ता श्यामा[१] सपत्नहृदये सुपयोधरा[२] च । दुष्टे

(७६) 'अभिमानिषु' अभि नास्ति भीर्भय यस्य तत् मा लक्ष्मी धनिषु न विद्यन्ते इषवो बाणा यस्मिंस्तत् अभिमानिषु गर्ववत्सु (७७) 'कुकुभेन' कु पृथ्वीम् कु धराम् घन कृष्णेन कुङ्कुमेन (७८) 'दंष्ट्राभम्' दंष्ट्रा दाढा तद्वत् आभा शोभा यस्य तत् द्वितीयायामुदय प्राप्तश्चन्द्रो वक्रोज्ज्वलगुणेन सूकरदंष्ट्रया सहोपमीयते दम्भ कपट जिन न करोति भद्र कल्याण जिन करोति (७९) 'कान्तगिरा' का तागिरा कान्ता मनोहरा गीर्वाणी यस्यासौ कान्तगीस्तेन कारा बन्दिगृहम् राका पूर्णमासी (८०) 'नागरगम्' ना पुमान् हे नाग हे सर्प। नागर नगरे भवस्तम् नागरङ्ग नारङ्गीफलम् (८१) 'किंशुकम्' किंशुक पलाशम् शुक कीरम् क ब्रह्माणम् (८२) 'हिमकरे' हिमकरे चन्द्रे उद्गते सति मकरे मत्स्ये उत्पन्ने सति करे हस्ते सायुधे ऊर्ध्वीकृते सति रे रे दास इति चामन्त्रणे (८३) 'तपसे' तपोगुणाय से सकारभाव सकारे वर्तने (८४) 'अनुसराम.' अनु पश्चाद्वाचि रामेण सह वर्तमान सराम अनुसरामवय परगुण प्रति अनुसरण कुर्म (८५) 'अनुजगृहे' हे अनुज भ्रात ! गृहे मया अनुजगृहे अनुगृहीत (८६) 'श्वासरोगम्' श्वा तेषु दिनेषु मैथुनेच्छो भवेत् सरमस्त्वागम् अग गोवर्धनम् श्वासरोगम्

(८७) 'कालिकापालिकमठ' कालिका श्यामता अपगता अलयो भ्रमरा यस्मात्तदपपालि भ्रमररहितम् कमठ कच्छप हे कालि हे पार्वति! कापालिको योगी तस्य मठ (८८) 'अहीनाक्षतनय' अही सर्पौ ना पुमान् क्षतनय क्षत खण्डितो नयो न्यायो येन स अन्यायवान् हे अहीन सर्पाणा स्वामिन्! अक्षतनय न क्षतो नयो न्यायो येन स अखण्डन्यायवान् हीने अक्षिणी यस्यासौ हीनाक्षोऽन्धस्तस्य तनय पुत्र न हीनाक्षतनयो अहीनाक्षतनय धृतराष्ट्रो हि हीनाक्षोऽन्ध इति पौराणिका तत्पुत्रो दुर्योधनोऽहीनाक्षतनयो न भवति, किंतु अन्धपुत्र इत्यर्थ (८९) 'कुन्दमकरन्दबिन्दव' कु पृथ्वीम् दमकर उपशमक्षमायुक्त भवतीत्यर्थ हे दविन् दवो विद्यते यस्मिंस्तत् दवि तत्संबोधनम् दव वनाग्नि कुन्दमकरन्दबिन्दव कुन्दानां पुष्पविशेषाणां मकरन्द पुष्परसस्तस्य बिन्दव कणा (९०) 'सरोजराजय' सरस्त्वागम् जरा वयोहानि जय सरोजराजय कमलश्रेणय (९१) 'शंकर' श सुखम् करो राजभाग शकरो महादेव (९२) 'भागीरथी' भा कान्ति गी वाणी रथी रथो विद्यते यस्य स भागीरथी गङ्गा (९३) 'नदीयताम्' नदी इयता एतावदक्षराणाम् न दीयताम् (९४) 'दवविकलम्' दलम् बलम् विलम् कल अव्यक्तमधुरम् दवविकल दावाग्निना व्याकुलम्

१ श्यामवर्णा लोहमयत्वात्, पक्षे,-षोडशवार्षिकी २ सुष्ठु पय जलं धरतीति सुपयोधरा लोहनिर्मिते शस्त्रे पानीय दीयते इति प्रसिद्धि, पक्षे,-सुस्तनी

कीदृग्भुजंगोऽस्ति किं कीदृक्कुम्भसमुद्भवस्य जठरं कीदृग्वियासुर्वधूः । श्लोकः कीदृगभीप्सितं सुकृतिनां कीदृङ्नभो निर्मलं क्षोणीमाह्वय सर्वग किमुदितं रात्रौ सरः कीदृशम् ॥ १०९ ॥ मुण्डः पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां कीदृग्वीरजनश्च कोऽतिगहनः संबोधयावञ्चितम् । का धात्री जगतो बृहस्पतिवधूः कीदृक्कविः काव्यतः कोऽर्थः किं भवता कृतं रिपुकुलं कीदृक्सरो वासरे ॥ ११० ॥ कस्मै यच्छति सज्जनो बहुधनं सृष्टं जगत्केन वा शंभोर्भाति च को गले युवतिभिर्वेण्या च का धार्यते । गौरीशं कमताडयच्चरणतः का रक्षिता राक्षसैरारोहादवरोहतः कल्प्यतामेकं द्वयोरुत्तरम् ॥ १११ ॥ कः सादम्बुदयाचको युवतयः कं कामयन्ते पतिं लज्जा केन निवार्यते निकटके दासे कथं यावनी । भाषा दर्शयतेति वस्तुषु महाराष्ट्रे कदा वा भवेदाद्यन्ताक्षरयोर्हि लोपरचनाचातुर्यतः पूर्यताम् ॥ ११२ ॥ का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी का रक्षत्यहिहा शरद्धिकचयेत्कं धैर्यहृच्छ्री च का । कः धत्ते गणनायकः करतले का चञ्चला कथ्यतामारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम् ॥ ११३ ॥ कुत्र श्रीः स्थिरतामुपैति भुवि को दुःखी किमीषत्पदं धर्मो दीनैर्निवारयन्ति पथि के पान्थस्य दीनस्य च । का सद्बुद्धिरिह श्रियश्च तमसः कौ नाशकौ प्रोच्यतां गच्छन्तं पथिकं किमाह यवनः सञ्ज्ञाभिलाषान्वितः ॥ ११४ ॥ कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जति कः कीदृक्तरुणीविलासगमनं को नाम राज्ञः प्रियः । पत्रं किं नृपते किमम्बु ललितं को रामरामाहरो मत्प्रश्नोत्तरमध्यमाक्षरपदं यत्तत्तवाशीर्वचः ॥ ११५ ॥ किं नाम जगतां न पश्यति च कः के देवताविद्विषः किं दातुः करभूषणं गिरिदरं वः किं पिधानं दृशाम् । के खे खेलनमाचरन्ति सुदृशां किं चारुताभूषणं बुद्ध्या ब्रूहि विचार्य सूक्ष्ममतिमन्स्त्वेकं द्वयोरुत्तरम् ॥ ११६ ॥ कः कर्णारिपिता गिरीन्द्रतनया कस्य प्रिया कस्तुः को जानाति परेङ्गितं विषमगुः कुत्रोदभूत्कामिनाम् । भार्या कस्य विदेहजा तुदति का मौमेऽह्नि निन्द्यश्च कस्तत्प्रत्युत्तरमध्यमाक्षरपदं सर्वार्थसंपत्करम् ॥ ११७ ॥ लावण्यं क नु योषितां नभसि के सञ्चारमातन्वते कासामुत्तरता भवन्ति निनदाः क क्रीडतो दम्पती । केषु श्रीः प्रकटीचकार भगवान्सीतापतिः पौरुषं मत्प्रश्नोत्तरमध्यवर्णघटितो देवो मुदे सोऽस्तु वः ॥ ११८ ॥ कः पूज्यः सुजनत्वमेति कतमः का स्तूयते पण्डितैः श्रीमत्या शिवया च केन भुवने युद्धं कृतं दारुणम् । किं वाञ्छन्ति सदा जना युवजना ध्यायन्ति किं मानसे मत्प्रश्नोत्तरमध्यमाक्षरपदं भूयात्तवाशीर्वचः ॥ ११९ ॥ क्षोणी कं सहते करोति दिवि का नृत्यं शिवायाः पतिर्भूतानां कमगुस्त जीवहरणे का रामराज्ये पुरी । के रक्षन्ति च साधवः पशुपते किं वाहनं प्रोच्यतामालोमप्रतिलोमशास्त्रचतुरैरेकं द्वयोरुत्तरम् ॥ १२० ॥

(१०९) 'कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखम्' कुमुत् पृथ्व्या हर्षोऽकारि, पृथ्वी उद्धृता इत्यर्थः अवनपरा अवनं रक्षणं धनस्य गोपनं तत्र परा सावधाना गरः विषम् पीतानि अम्भांसि जलानि येन तज्जिताम्भः विहितगमा विहितः कृतो गमो गमनं यया सा गमकः अर्थाभिप्रायेण गम्यते प्राप्यते स गमकः अकमुक् कं पानीयं मुञ्चन्ति ते कमुचो मेघाः न विद्यन्ते कमुचो यस्मिन् तत् अकमुक्, मेघै रहितमित्यर्थः हे धरे हे पृथ्वि! खं आकाशम् कुमुदवनपरागरञ्जिताम्भोविहितगमागमकोकमुग्धरेखं कुमुदानां चन्द्रविकासिकमलानां वनानि तेषां परागेण रजसा रञ्जितं रक्तयुक्तं कृतं अम्भो जलं यस्मिन् तत् ईदृशं सरः पुनः कीदृशम्? विहितौ निष्पादितौ गमागमौ गमनागमने याभ्यां तौ विहितगमागमौ तौ च तौ कोकौ च ताभ्यां कृता मुग्धा सुन्दरा रेखा पङ्क्तिर्यस्मिन् तत् यतस्तौ चक्रवाकीचक्रवाकौ अन्योन्य 'वियुक्तौ सन्तौ रात्रौ मिलनाय तीरात्तीरं पर्यटतः' तयोर्गमनागमनेन जलरेखाया भवात् रात्रौ सरः ईदृशं इति भावः (११०) 'विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम्' हे विकच विगता कचा केशा यस्य सः तत्संबोधनं हे वालरहित। वारि जलम्, महाप्रलये हरिः शेषशय्यायां समुद्रजले शेते जरा वृद्धत्वम्, आजिसमुत् आजौ संग्रामे समुत् सहर्षः, भव संसार, हे अच्छलित हे अवञ्चित! भूः पृथ्वी इपराः कामस्तेन परा उत्कृष्टा नित्ययौवनवती गवि वाण्याम्, रा द्रव्यम्, जितम् 'विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितं' विकचानां प्रफुल्लानां वारिजानां कमलानां राजिः पङ्क्तिस्तस्याः समुद्भवस्तेन उच्छलितो यो भूरिः प्रचुरः परागः तेन विराजितं शोभितम् (१११) साधवे-वेषमा, काम्भा-भालिका, काल-रका (११२, ११३) धारा-राधा वधा-धाव (अहिहा इन्द्र) कारा-शका धारा-राधा (विद्युत्)

(११४) इमे उत्तरे अर्थस्फोरिते एवान्येषां योजनासौकर्याय लिख्येते—प विष्णौ, भयी भीतियुक्तः, आ सला (डलयोरभेदात् खला) एवं प भव्या खडा (११५) ग्रहेश रामेण मैनाक मथरम् सचिव तुरग गज- राजीवम् रावण एतन्मध्यमाक्षरघटितं वाक्य 'हे मे नाथ! चिरं जीव' इति राजानं प्रत्याशीर्वचनम् (११६) अन्ध अत्र दृग्विहीनश्च दानवा दैत्या दानवारि च, दानोदकमित्यर्थः तम राहुः अन्धकारश्च वय पक्षिणः तारुण्यं च (११७) वासव हरस्य हस्तस्य तुगागमो 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण मतिमान् नमसि रामस्य कुस्तुति अभ्यङ्ग एतन्मध्यमाक्षरघटितवाक्यं 'सरस्वति नमस्तुभ्यम्' इति विषमाः पञ्च गावो बाणा यस्येति विषमगुः कामः (११८) नैपुण्ये, अण्डजा, पारीणा, एकान्ते, रक्षःसु, मध्यमवर्णोद्धारात् पुण्डरीकाक्ष—इत्युत्तरम् पारीणामित्यस्य नदीपूर इत्यर्थः 'कर्करीपूरयोः पारी पादरज्वां च हस्तिनः' इति विश्वः (११९) भूदेवः, स्वयशः, संसदि, दुर्गेण (दैत्य) वैभवं, युवतिं, मध्यमाक्षरोद्धरेण देवसर्वं भव इत्युत्तरम् उच्चकोटिस्थः स्याः इति तात्पर्यम् (१२०) भारं—रमा काल—लङ्का दीन—नदी

